श्रीरघुनाथशिरोमणिभट्टाचार्यकृते

# वादार्थसंग्रहे

## आख्यातशक्तिवादः

( चतुर्थो भागः )

मथुरानाथतर्कवागीशविरचिता आख्यातवादरहस्य-२ राम-
चन्द्रन्यायवागीशभट्टाचार्यविरचिताख्यातवादटिप्पणी-
३ रघुदेवभट्टाचार्यकृताख्यातवादटिप्पणी-४ जय-
रामभट्टाचार्यकृत व्याख्या-५ न्यायवाचस-
तिकृत व्याख्या- ६ रामकृष्णनिर्मिता
व्याख्या- इति षट्टीका समन्वितः

मुम्बय्यां
फोर्टसर्कलाख्ये प्रविभागे शास्त्रभवने
' नटवरलाल इच्छाराम देसाई ' इत्यनेन स्वीये ' गुजराती '
मुद्रणयन्त्रालये मुद्रयित्वा तत्रैव प्रकाशितः ।

---

# वादार्थसंग्रहः

( चतुर्थो भाग )

## शिरोमणिकृताख्यातशक्तिवादः ।

### व्याख्याद्वययुतः १३

मथुरानाथी

आख्यातस्य यत्नो वाच्यः पचति पाकं करोतीति यत्नार्थककरोतिना सर्वाख्यातविवरणात् । व्यवहारादिव बाधकं विना विवरणादपि व्युत्पत्तेः किङ्करोतीत्यादियत्नप्रश्ने पचतीत्याद्युत्तरस्य यत्नार्थकत्वं विनानुपपत्तेश्च । अचेतने रथो गच्छतीत्यादौ च अनुकूलव्यापारे लक्षणेति प्राञ्चः ॥ १ ॥

अथ शिरोमणिकृताख्यातशक्तिवादविवृति ।

इच्छितार्थरसेन वादयन् वंशिका प्रचलदङ्गुलपङ्क्ति ।
मोहयन्नखिलवामलोचना पातु कोऽपि नवनीरदच्छवि ॥

श्रीमता मथुरानाथ-तर्कवागीशधीमता ।
आख्यातशक्तिवादस्य क्रियते विवृति शुभा ॥

आख्यातस्य शक्ति निरूपयति–'आख्यातस्येति । आख्यात यत्नत्वावच्छिन्नशक्यताकमित्यर्थः, तेन वक्ष्यमाणहेतोर्न वैयधिकरण्यम । आख्यातत्वञ्च सङ्केतविशेषसम्बन्धेन आख्यातपदवत्त्वं, न तु जाति, तिवादिना साङ्कर्यात् भावाभावात् । यत्नतावच्छेदकञ्च न तत्, किन्तु प्रत्येकं तिवादिकमेव, आख्यातत्वप्रकारेणाज्ञानदशायां तिवादिना ज्ञानात् शाब्दबोधमात्रस्य शक्तिभ्रमजन्यत्वप्रसङ्गात्, तिवादिना प्रकारेणाज्ञानदशायां तत्प्रकारेण ज्ञानात् शाब्दबोधानुदयस्य सर्वसिद्धत्वात् । यत्नत्वञ्च प्रत्यक्षसिद्ध, प्रवृत्तित्व च रागज यत्नावच्छेदकतया सिद्ध, अहं यते अहं प्रवृत्तोऽस्मि अहं करोमीत्यनुव्यवसायसाक्षिको निवृत्ति–जीवनयोनि यत्नतो जातिविशेष, निवृत्तिजीवनयोनियत्नयो रागज यत्नात् तथा-

---

१ यत्नवाचकत्वम् इ पा २ 'शक्तिग्रहात्' इ पाठ ३ तीति प्रश्ने इ पाठ. ४ त्युत्तर पाठ ।

हृन्यवसायविरहात् । चेष्टाजनकतावच्छेदक स एव निवृत्तेश्चेष्टाजनकत्वविरहात्। सुषुप्तौ शरीरकर्मणि चेष्टात्वे मानाभावात्, तत्रापि चेष्टात्वस्यानुभवसिद्ध- त्वे रागजन्यतावच्छेदकप्रवृत्तित्वव्यापको निवृत्तिव्यावृत्तो जीवनयोनियत्नसाधा रणो जातिविशेष एव चेष्टाजनकतावच्छेदक, स च नाख्यातस्य शक्यतावच्छे- दक तथासत्याख्यातस्य कृधातुपर्यायत्वानुपपत्तेः । सुषुप्तौ जीवनयोनियत्नसत्वे- ऽपि स्वारसिककरोतिप्रयोगाभावेन रागजन्यतावच्छेदकप्रवृत्तित्वस्यैव कृधातु शक्यतावच्छेदकत्वात् । एतेन " प्रवृत्ति–निवृत्ति–जीवनयोनिसाधारणं गुणविभा- जक प्रयत्नत्वमेव आख्यातस्य शक्यतावच्छेदकम् । न चैवं पाकगोचरनिवृत्तिद- शायामपि पचतीत्यादि प्रयोग स्यादिति वाच्यं । निवृत्तेः क्रियाहेतुत्वाभावात् क्रियानिष्ठसाध्यत्वाख्यविलक्षणविषयत्वानिरूपकत्वाच्च । तथाच व्यवहारासंभ- वात् आख्यातार्थप्रयत्न–धात्वर्थयोस्तादृशसम्बन्धेनैवान्वयस्य साकाङ्क्षत्वात् यो- ग्यताभ्रमात् तथा प्रयोगस्येष्टत्वात् । प्रवृत्तित्वस्य शक्यतावच्छेदकत्वेऽपि लक्षण- या योग्यताभ्रमात् तदानीं तादृशप्रयोगस्य दुर्वारत्वात् ' इति कस्यचित् प्रलपित मपास्तम् । तथा सति आख्यातस्य कृधातुपर्यायत्वानुपपत्ते गुणविभाजक- प्रयत्नत्वस्य जातित्वे मानाभावेन प्रवृत्तित्वमपेक्ष्य तस्य गुरुत्वाच्च । न च प्रवृ- त्तित्वस्य शक्यतावच्छेदकत्वे चैत्रो नि श्वसितीत्यादौ कथं श्वासादुत्प्रयत्नानु- भव इति वाच्यम् । तत्र श्वासाश्रयत्वमात्रप्रतीते शरीरक्रियाविशेषस्य श्वासत्वात्। न च तथापि प्रवृत्तित्वस्य शक्यतावच्छेदकत्वे परमेश्वरो वेद वक्ति परमेश्वरो वे- दमुच्चारयति परमेश्वरो वेदं प्रयुङ्क्ते इत्यादौ कथं वेदाभिधशब्दानुकूलयत्नवत्त्वानुभव वेदजनकत्वाद्यभिधानानुकूलयत्नवत्त्वानुभवो वा इति वाच्यम् । कार्यसामान्य प्रत्यनिकृतत्वा व्याप्यधर्मतया च प्रवृत्तित्वस्यैव जनकतावच्छेदकत्वेऽपि भाग- वतमयत्नेऽपि प्रवृत्तित्वस्य धर्मिग्राहकप्रमाणसिद्धत्वात् । यद्वा तत्र वचादिधा- त्वर्थ यत्नसामान्यमर्थं, अनुकूलत्व विषयत्व वा कर्मनिमकत्वर्थं, आख्यात- स्याश्रयत्वमर्थं, आख्यातस्यैव वा यत्नसामान्यं लक्षणा वचादिधातुश्च कण्ठाद्य भिघातपर एव ।

केचित्तु परमेश्वरपद तदीयकण्ठपर, वचादिधातो कण्ठाद्यभिघात एवार्थ, आख्यातस्य आश्रयत्वमेवार्थ, आख्यातस्यैव वा परम्परासम्बन्धविशेषेणाश्रय- त्वमर्थं, तथाच परमेश्वरपद यथाश्रुतमेवेत्याहुः ।

तथासति प्रतिपादकतादिविशेषसम्बन्धेन कृत्यनुमत्वादिति हेतुत्वं । विशेषेणानु- पादानात् आत्मादौ न व्यभिचार । नन्वयं हेतुरसिद्ध इत्यत आह–पच- तीति । पचति पाकं करोतीत्यादिवाक्यमध्यवर्तिना यत्नार्थकरोतिना यत्नवाच- कृधातुना सर्वाख्यातानां लत्वादिकमर्थकत्वानुमिति- [illegible] स्थितत्वं [illegible]

पाकं [illegible]

[illegible] पाक

करोतीत्यत्र करोतिना पचतीत्यादेर्विवरणादसङ्गतत्वापत्तेः । सर्वाख्यातवि-वरणादित्यस्य सर्वैराख्यातविवरणादित्यर्थः, इति केचित् । अयं भावः, पचति पाकं करोतीत्यादिविवरणेषु पचतिपदं स्वपरतया पचपदपरं तिपदपरञ्च, पाकपदसमभिव्याहारेण कृधातुः पाकसमानार्थकत्व-कृञ्समानार्थकत्वपरः, आख्यातत्वमाख्यातार्थः, एवञ्च पचपदं पाकसमानार्थकं, तिपदं कृञ्समानार्थकमित्यादिबोधः । एवं सर्वत्रैव विवरणे चरमपदे यत् तत्पदसमभिव्याहारेण तत्तत्समानार्थकत्वे लक्षणा । अतएव येन समानार्थकतया यत् बोध्यते तत् तस्य विवरणमिति प्रामाणिकाः । ननु तथापि शक्यप्रतिपादकतावच्छेदकसम्बन्धेन कृधातुपरस्य लक्षणादिना कृधातुशक्यप्रतिपादके शब्दे अनैकान्तिकमित्यत आह, व्यवहारादिरिति । वाचकं विना स्वसाध्यवाचकं यद्विशेषणं तदभाववत्त्वविशेषणोपादानेन, व्युत्पत्तेः व्युत्पत्तिसंभवात् व्यभिचारो न भवतीति यावत् । गवादिपदव्यवहारो यथा गवादिपदशक्यत्वस्वरूप-स्वसाध्यस्य वाचकं यद्विशेषणं लक्षणा-शक्तिभ्रमजन्यप्रतिपत्तिविषयतासम्बन्धेन गवादिव्यवहारवत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टोभय प्रतिपादकतासम्बन्धेन गवादौ गवादिपदशक्तिसाधकः, तथा कृधातुसमानार्थकपदविवरणमपि प्रवृत्तिनिमित्तीभूतत्वादिरूपस्वसाध्यस्य वाचकं यद्विशेषणं लक्षणा-शक्तिभ्रमजन्यस्वगतप्रतिपत्तिजनकतासम्बन्धेन कृधातुमत्त्वं तदभाववत्त्वे सतीति विशेषणविशिष्टभूतस्य शक्यप्रतिपादकतावच्छेदकसम्बन्धेन प्रकृताख्यातादौ शक्तिसाधकमित्यर्थः, तथाच निरुक्तबाधकाभाववत्त्वे हेतौ विशेषणं देयमिति भावः । अतएव "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ इति पठन्ति । तत्रानुमानपदं व्यवहारादीतरानुमानपरं, तेन व्यवहारादेर्न पृथगुपादानविरोधः ।

सांप्रदायिकास्तु तत्राख्यातस्य किं शक्यमित्यत आह, आख्यातस्येति । यत आख्यातस्य वाच्य इति यथाश्रुतं यथार्थः । ननु तस्याख्यातपदस्य वाच्ये किं मानमित्यत आह, 'पचतीति, अभेदे तृतीया, अन्वयधर्मस्य विवरणे, विवरण स्वसमानार्थकस्वाख्यापकं, आप्तवाक्यानुकूलः शब्दः, प्रमाणान्तरं पञ्चम्यर्थः, तथाच विवरणमेव मानमिति भावः । ननु विवरणस्य शक्तिप्रमापकत्वे न शब्दविषया शक्तिः पदार्थत्व-वाक्यार्थत्वयोरभावादत आह-व्यवहारादिवेति । तथाचानुमानविधयैव तस्य शक्तिप्रमापकत्वमिति भावः । अनुमानभेदत्वमिति व्याख्येयम् ।

ननु विवरणेन कृधातुशक्यप्रतिपादकत्वं विवादेन बोधितं, अपि तु कृधातुप्रतिपाद्यप्रतिपादकत्वं तत्र व्यवस्था कृधातोः प्रतिपाद्यस्य व्यापारः प्रतिपादकत्वेऽपि निर्णीतमित्यत आह-किं करोतीति । किंविषयकत्वप्रकारकप्रश्ननिवृत्तिविशिष्टविशेष्यकधर्मं करोत्यर्थः । किंविषयकत्वं जिज्ञासितविषयकत्वं, किंशब्दस्य जिज्ञासितवाचकत्वात् । 'यत्नार्थकत्वं विना' आख्यातस्य प्रतीति-

विशिष्टार्थकत्वं विना, अनुपपत्तेरिति जिज्ञासानिवर्तकत्वानुपपत्तेरित्यर्थः । यद्धर्मविशिष्टे जिज्ञासितस्य तत्सम्बन्धः प्रश्नवाक्येन बोध्यते तद्धर्मविशिष्टे विशिष्य तत्सम्बन्धज्ञानेनैव जिज्ञासानिवृत्तेरिति भावः । तथाच आख्यातं प्रवृत्तित्वावच्छिन्नशक्यताकं प्रवृत्तित्वविशिष्ट जिज्ञासाया निवर्तकस्य ज्ञानस्य जनकत्वात् इत्यनुमानप्रकारोऽस्त्येव । तथापि लक्षणा–शक्तिभ्रमाजन्यत्वेन ज्ञानं विशेषणीयं, तेन लक्षणया प्रवृत्तिबोधके शब्दे न व्यभिचारः । न च लक्षणाशक्तिभ्रमाजन्यप्रवृत्तित्वविशिष्टविषयकज्ञानजनकत्वादित्येवास्त्विति वाच्यम्, हेत्वन्तरसम्भवस्य इत्यस्य वादूषकत्वादिति निगर्यः । ननु पूर्वहेतौ लिङ्गबाधकाभावस्य विशेषणम् अत्र तु लक्षणाशक्तिभ्रमाजन्यत्वं ज्ञानविशेषणमप्रसिद्ध, प्रवृत्तित्वस्याख्यातशक्यतावच्छेदकत्वे रथो गच्छतीत्यादिवाक्यस्यायोग्यत्वापत्त्या अनुकूलव्यापारादावाख्यातस्य शक्ते रथादेरचेतनतया चैतन्यानवच्छेदकतया च तत्र प्रवृत्तिमत्त्वासम्भवात् । अपचत्यपि चैत्रादौ कालिकादिसम्बन्धेन प्रवृत्तिमत्त्वमादाय चैत्र पचतीत्यादिव्यवहारवारणाय समवायावच्छिन्नवृत्तिताकत्वसम्बन्धेनैव कर्तृपदार्थ आख्यातार्थप्रकारान्वयस्य साकाङ्क्षत्वमित्यभ्युपगन्तव्यात्, आत्मा पचतीत्यादिप्रयोगानभ्युपगमे समवायोऽपि नान्तर्भावनीय, परमेश्वरो वेद वर्तीत्यादौ परमेश्वरपदस्य तच्छरीरपरत्व एव योग्यत्वं न तु परमात्मपरत्व इति वाकामेन स्वीकरणीयमित्याशङ्क्य प्राचीनमतमाश्रित्य परिहरति–अचेतनइत्यादिना । 'अचेतने' अचेतनविशेष्यकाख्यातार्थप्रकारकबुद्धिजनके, 'अचेतनत्वं' समवायावच्छिन्नत्वान्यतरसम्बन्धेन चैतन्यवतो भिन्नत्वं तेन चैत्र पचतीत्यादेर्न सङ्ग्रहः, तण्डुल पच्यत इत्यादेर्यत्नच्छेदार्थकत्व 'रथो गच्छतीत्यादाविति, तेन कर्तृरन्तिरस्यात इति लभ्यते, 'च ' स्वर्थे । अनुकूलव्यापारे लक्षणेति अनुकूलव्यापारे निरूढलक्षणेत्यर्थः । यादृशलक्षणया प्रयोगे कथाया वादिनो न निग्रहः सैव लक्षणा निरूढा । अनुकूलत्वस्य धात्वर्थाख्यातार्थव्यापारयोः सम्बन्धतया स्वीकरणायानुकूलत्वेनोपादानं, न तु लक्ष्यतावच्छेदक तदन्तर्भावः । व्यापारत्वञ्च कार्यत्व तत्र प्रतियोगितासम्बन्धेन ध्वंसवत्त्व प्रागभाववत्त्व वा व्यापारत्वम् ॥ १ ॥

रामचन्द्रतर्कवागीशकृतव्याख्या ।

आख्यातस्येति । आख्यातत्व शक्यतावच्छेदक यत्तत्वञ्च शक्यतावच्छेदकमित्यर्थः, तत्राख्यातत्व तत्व वर्णानुपूर्व्यजातिविशेष, त्यादयो लकारादेशाः, तथाचाप्रसक्तस्य पचतीत्यादावादर्शेन त्यादिना आदेशिनो लकारस्य स्मरणादेव यत्नत्वविशिष्टस्योपस्थिति–शाब्दबोधौ निर्वहतः । वस्तुतस्तु च त्यादावेव यत्नत्वविशिष्टशक्तिभ्रमादन्वयबोध । न च त्यादि ककारादयत्नमादाय विनिगमकाभाव सत्त्वेन पाणिनिमुनिना त्यादीनां लकारादेशत्वबोधनं न तु ककारादीनामित्यस्यैव विनिगमकत्वादिति सम्प्रदायविद । आख्यातपदात् त्यादयो आख्यातवैयाकरणपरिभाषाविषयत्वसम्बन्धेनाख्यातपदवत्त्वमेवा-

स्थाली पचतीत्यादौ पाकानुकूलव्यापारस्य विवरणेऽपि न व्यापारत्वविशिष्टे शक्ति- यत्नत्वापेक्षया व्यापारत्वस्य गुरुत्वमेव बाधकमेव पचति पाकं यत्नवान् इत्यादिना धर्मिणो विवरणेऽपि नव्यान्यन्यत्वमत्र बाधकमिति भावः । तदाह "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद्व्यवहारतश्च । वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः" ॥ 'विवृति' विवरणमित्यर्थ इति, तथाच शक्तिग्राहकाणां मध्ये विवरणस्यापि शक्तिग्राहकत्वमुक्तमिति न सिद्धान्तविरोधः । विवरणस्य शक्तिग्राहकता च व्यवहारस्येव अनुमानोत्थापकतया । तथा हि पचतीत्यादावाख्यातपदं यत्नत्वविशिष्टे शक्तं यत्नत्वविशिष्टार्थककृधातुप्रतिपाद्यार्थकशब्दत्वादित्याद्यनुमानम्, अत्र च कृधातुप्रतिपाद्यार्थकत्वरूपं विवरणं हेतुघटकमिति शक्तिग्राहकानुमानहेतुघटकत्वमेव विवरणस्य शक्तिग्राहकत्वपदार्थ इति भावः । न च व्यवहारस्य शक्तिग्राहकत्वाभावेन व्यवहारादिवेति दृष्टान्तविरोध इति वाच्यम् । घटपदं घटत्वविशिष्टे शक्तं, लक्षणाद्यजन्यघटत्वविशिष्टबोधजनकपदत्वादित्यनुमाने घटत्वविशिष्टबोधकत्वरूपव्यवहारस्य हेतुघटकतया शक्तिग्राहकानुमानोत्थापकत्वसम्भवात् । 'अनुयन्ते' शक्तिग्रहात्, व्युत्पत्तिवादस्य शक्तिग्राहकत्ववत् शक्तिग्रहः च वक्तव्यादिति भावः । ननु नैयायिकानां यत्नत्वविशिष्टे आख्यातस्य विवरणवत् मीमांसकानां व्यापारेऽपि विवरणात् व्यापारत्वविशिष्टेऽपि शक्तिः स्यादिति न विवरणस्य शक्तिग्राहकतेत्यत आह—किं करोतीति । कृतित्वविशिष्टधर्मिक-किंचिद्धर्मप्रकारकजिज्ञासाविषयः किंशब्दार्थः, 'किम्' इति क्रियाविशेषणं, तथाच किं करोतीत्यस्य तादृशजिज्ञासाविषयाभिन्नकृतिमानित्यर्थः, क्रियाविशेषणस्याभेदेनान्वयस्य व्युत्पन्नत्वात् । न च किमित्यत्र द्वितीयाया अनुकूलत्वमर्थः, तथा सति विषयत्वेनान्वयानुपपत्तिप्रसङ्गादिति भावः । अस्तु वा विषयत्वमेव द्वितीयार्थः, तादृशजिज्ञासा च किंशब्दार्थ इति । यत्नार्थकत्वं विनेति । पचतीत्यस्य यत्नत्वविशिष्टार्थकत्वविरहे पचतीत्यतो यत्नत्वविशिष्टधर्मिकपाकप्रकारकबोधो न स्यात् तथाच प्रश्नवाक्यजन्यजिज्ञासानिवर्तकज्ञानजनकवाक्यत्वरूपमुत्तरत्वं पचतीति वाक्ये न स्यादित्यर्थः । नन्वाख्यातस्य यत्नत्वविशिष्टबोधकत्वे रथो गच्छतीत्यादिवाक्यस्यायोग्यत्वापत्तिः अचेतने रथादौ गमनानुकूलयत्नबाधादित्यत आह—अचेतन इत्यादि । अचेतनविशेष्यकबोधजनक इत्यर्थः । अनुकूलव्यापारे । तथाच रथो गच्छतीत्यादौ गमनानुकूलव्यापारस्य नोदनाभिघातादिरूपव्यापारस्य सत्त्वान्नायोग्यत्वमिति भावः । इत्थं प्राचीनमतम् ॥ १ ॥

रघुदेवभट्टाचार्यकृता आख्यातवादटीका ।

प्रणम्य नीरदश्यामं श्रीरामं गुणमन्दिरम् ।
[illegible] रघुदेवेन तन्यते ॥ १ ॥

नैयायिकमतं निराकर्तुं स्वमतं व्यवस्थापयति—आख्यातस्येत्यादिना ।

यत्नो वाच्यः यत्नत्वविशिष्टो वाच्यः, यत्नत्वं शक्यतावच्छेदकमिति यावत्। यथाश्रुते यत्नस्य व्यापारान्तर्गतत्वेन व्यापारशक्तिवादिमतव्यवच्छेदाप्रतीतेः। शक्ततावच्छेदकं चाख्यातत्वम्। तच्च रूढिसंबन्धेनाख्यातपदवत्त्वम्। यदि च रूढिसंबन्धेनाख्यातपदवत्त्वं लकारेष्वेव अभियुक्तानां तत्रैवाख्यातपदप्रयोगात्, तथा च पचन्नित्यादावपि कृतिबोधापत्तिः। तत्रापि लकारस्थाने शत्रादेर्दर्शनेन रूढिसंबन्धेनाख्यातपदवत्त्वो लकारस्य सत्त्वादिति विभाव्यते; तदा विशिष्य तिप्त्वादिकमेव शक्ततावच्छेदकं बोध्यम्। एतेन दशलकारसाधारणं लत्वमेव शक्ततावच्छेदकमिति परास्तम्। तस्यैक्याभावात् भावे वा पचन्नित्यादावपि कृतिबोधप्रसङ्गादिति। तथा च यत्नत्वावच्छिन्नविषयकशाब्दत्वावच्छिन्नं प्रति यत्नत्वावच्छिन्नविशेष्यकरूढिसंबन्धघटिताख्यातपदवत्त्वावच्छिन्ननिरूपितशक्तिविषयकज्ञानजन्ययत्नोपस्थितित्वेन हेतुत्वं कल्पनीयमिति ध्येयम्। ननूपदर्शितकार्यकारणभावकल्पने शुद्धाख्यातपदाद्यत्नविषयकशाब्दबोधापत्तिरिति चेन्न। संभवत्येवं यदि हि पाकाद्यनुकूलविषयकशाब्दत्वावच्छिन्नं प्रति तिबादिपदनिष्ठपचादिधात्वव्यवहितोत्तरत्वरूपानुपूर्वीज्ञानस्य हेतुत्वं न कल्प्यते। वस्तुतस्तु शुद्धाख्यातपदजन्ययत्नोपस्थितिकाले पाको यत्नश्चेति निराकाङ्क्षवाक्यात्पाकानुकूलयत्नविषयकशाब्दबोधवारणाय तादृशकार्यकारणभावकल्पनाया आवश्यकत्वेनोपदर्शिताख्यातपदनिरूपितशक्तिज्ञानजन्योपस्थित्या यत्नशाब्दबोधे जननीये पचतीत्याद्यानुपूर्वीज्ञानस्य सहकारित्वकल्पनेनैव केवलाख्यातपदाद्यत्नविषयकशाब्दबोधवारणसंभवात्।

केचित्तु आख्यातस्य यत्नवाचकत्वे पाकगोचरनिवृत्त्याख्ययत्नकाले चैत्रः पचतीत्यादिप्रयोगस्य योग्यत्वापत्तिमुद्भावयन्ति तन्न श्रद्दधीमहि। प्रवृत्त्यभावातिरिक्तनिवृत्त्याख्ययत्ने मानाभावात्। वस्तुतस्तु निवृत्त्याख्ययत्नाङ्गीकारेऽपि न क्षतिः। यतः पचतीत्यादिवाक्यात्पाकानुकूलकृतेरेव शाब्दबोधोत्पत्त्या निवृत्त्याख्ययत्नकाले पाकानुकूलकृतेरभावेन तदानीं तादृशप्रयोगस्य तथाविधप्रमात्मकशाब्दबोधाजनकतयायोग्यत्वं सूपपादमेवेति। ये तूपदर्शितापत्तिभिया प्रवृत्तित्वमेवाख्यातशक्यतावच्छेदकमुपवर्णयन्ति। तन्न। तेषां मते इष्टसाधनताज्ञानजन्यतावच्छेदककोटिप्रविष्टत्वेन सिद्धायाः प्रवृत्तित्वाख्यजातेरीश्वरीयकृतिसाधारण्ये मानाभावेनेश्वरो वेदं वक्तीति वाक्याच्छाब्दबोधानिर्वाहः परिचिन्तनीयः। न च तत्राख्यातस्य कृतौ लक्षणया नानुपपत्तिरिति वाच्यम्। उपदर्शितरीत्या तादृशशक्त्यैव वाक्यजन्यशाब्दबोधस्य निर्वाहे लक्षणाकल्पनस्यानौचित्यात्। न चाख्यातस्य यत्नत्वविशिष्टशक्तत्वे चैत्रः पचतीत्यादिवदीश्वरः पचतीत्यादिप्रयो-

पाकं करोतीत्यादिवाक्यस्य धात्वर्थविषयकयत्नमात्रबोधकत्वेन यत्ने आख्यातस्य शक्तत्वबोधकतया तस्य शक्तिग्रहे शब्दविधया प्रमाणत्वासम्भवात् । नान्त्यः । साध्याद्यनुपयोगासम्भवादिति चेन्न । आख्यातपदं यत्नत्वविशिष्टे शक्तम्, बाधकं विना यत्नत्वविशिष्टार्थकत्वरोधिप्रतिपादितार्थकत्वात्, पाकत्वविशिष्टशक्तपाकपदप्रतिपादितार्थकपचधातुवत् । यद्यद्धर्मविशिष्टार्थबोधकपदप्रतिपादितार्थकं तत्तद्धर्मविशिष्टे शक्तमिति सामान्यव्याप्त्या विवरणस्यापि शक्तिग्राहकत्वसम्भवात् । ननूक्तदर्शितानुमानप्रयोजकमत आह—व्यवहारादिवेति । बाधकं विना अन्यलभ्यत्वप्रतिसन्धानं विना । इदं तु धर्मिण्यन्यलभ्यत्वस्य शक्तिव्यवच्छेदार्थमुक्तम् । व्युत्पत्तेरिति । शक्तिग्रहसम्भवादित्यर्थः । तथा च विवरणहेतुकानुमानस्य शक्तत्वग्राहकत्वे तुल्ययुक्त्या व्यवहारहेतुकानुमानस्यापि शक्तत्वग्राहकतया घटत्वादिविशिष्टे घटपदादेरपि शक्तिविलोपप्रसङ्गादिति भावः ।

ननु विवरणं तत्रैव शक्तिग्राहकं यत्र नान्यलभ्यत्वप्रतिसन्धानवार्ता । प्रकृते तु पाको यत्नजन्यः पाकत्वादित्यनुमानादपि यत्नस्य लाभसम्भवेनान्यलभ्यत्वात् अन्यलभ्यस्यापि आख्यातपदशक्यत्वे किमपराद्धं धर्मिणेत्यत आह—**किं करोति** इत्यादि । यत्प्रश्ने यत्नत्वविशिष्टजिज्ञासितसम्बन्धबोधकशब्दप्रयोगे, पचतीत्युत्तरस्योत्तरकालभाविपचतीत्यादिवाक्ये उपदर्शितप्रश्ननिवर्तकत्वस्य, यत्नार्थकत्वं विना यत्नत्वविशिष्टे पाकसम्बन्धबोधं विना । अयं भावः—यद्धर्मविशिष्टे यद्धर्मव्याप्यधर्मावच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यप्रतीयमाने तद्धर्मविशिष्टे तद्धर्मव्याप्यधर्मावच्छिन्नसम्बन्धबोधकं तदुत्तरवाक्यात्प्रतीयते, तदा तदुत्तरवाक्यस्य तत्प्रश्ननिवर्तकत्वं सम्भवति । यथा घटत्वविशिष्टे जिज्ञासितसम्बन्धबोधके कस्माद्घट इति प्रश्ने घटत्वविशिष्टे दण्डजन्यत्वबोधकं 'दण्डात् घटः' इत्युत्तरवाक्ये तन्निवर्तकत्वम् । प्रकृते च आख्यातस्य यत्नत्वविशिष्टवाचकत्वे व्यापारवाचकस्य पचतीतिवाक्यस्य पाकानुकूलव्यापारबोधाभ्युपगमे यत्नत्वविशिष्टे पाकसम्बन्धबोधाभावात्तद्वाक्यस्य यत्नत्वविशिष्टे जिज्ञासितसम्बन्धबोधकं 'किं करोति' इति प्रश्नवाक्यनिवर्तकत्वानुपपत्त्या अन्यलभ्यत्वेऽप्याख्यातस्य यत्नत्वविशिष्टे शक्तिरावश्यकीति ।

ननु रथो गच्छतीत्यादावाख्यातस्य यत्नबोधकत्वासम्भवेन व्यापारे शक्तिरावश्यकीत्यत आह—अचेतन इति । अचेतनार्थमुख्यविशेष्यकबोधजनक इत्यर्थः । अनुकूलव्यापार इति । अत्रानुकूलत्वोत्कीर्तनं तु गमनस्य तेन सम्बन्धेन व्यापारेऽन्वयस्फोरणाय, न तु तदन्तर्भावेनापि लक्षणीयत्वा व्यर्थत्वात् । तत्र गमनस्यान्वये पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेनेति व्युत्पत्तिविरोधाच्च ॥ १ ॥

## जयरामभट्टाचार्यकृतव्याख्या ।

न्यायपञ्चानन श्रीमाञ्जयराम समासतः ।
आख्यातवादव्याख्यानमातनोति मनोरमम् ॥

अनुकूलव्यापारत्वमाख्यातशक्यतावच्छेदकमिति केचित् । अनुकूलत्वस्य संसर्गत्वाद्व्यापारत्वमात्रं तथेत्येके । अनुकूलत्वमात्रं तथेत्यन्ये । धातोरर्थं फलमनुकूलव्यापारादिकमाख्यातस्येति मण्डनः । तत्तत्फलावच्छिन्नव्यापारविशेषस्तत्र तात्पर्यं । संख्यावर्तमानत्वादिकं क्वचिदाश्रयश्च आख्यातार्थ इति गुरवस्तत्सर्वं निराचिकीर्षुः प्रतिजानीते—आख्यातस्येति । आख्यातत्वं सङ्केतविशेषसम्बन्धेन आख्यातपदवत्त्वम् । एतेन यिमचित्वादयो व्याख्याताः । तिबाद्यन्यतमत्वं वा तत् । इदं च साध्यकोटिनिविष्टं न तु शक्ततावच्छेदकं विनाऽपि तेन रूपेण ज्ञानं, तिप्त्वादिना ज्ञानादेव तिबादितोऽर्थप्रत्ययेन तिप्त्वादेरेव तत्त्वात् ।

परे तु तिप्त्वाद्यवच्छिन्नस्य सङ्केतभ्रमादेव बोधः । शक्ततावच्छेदकानन्त्ये शक्त्यानन्त्यापत्त्या सर्वत्र तत्तत्पदान्यतमत्वस्यैव शक्ततावच्छेदकत्वादित्याहुः ।

यत्तु लट्, लिट्, लुट्, लृट्, लेट्, लोट्, लङ्, लिङ्, लुङ्, लृङ्, । इति दशलकारसाधारणलत्वावच्छिन्नस्य यत्ने, आदेशभूततिबादिवृत्तिना तिप्त्वादिना एकवचनत्वादिना चाऽवच्छिन्नस्यैकत्वादौ लट्त्वाद्यवच्छिन्नस्य वर्तमानत्वादौ शक्तिः । इत्थं च पचतीत्यादौ तिबाद्यादेशस्मारितलकारादेव यत्नादिप्रत्ययः । लडादेशयोरपि शतृशानचोः कर्तरि शक्तिरादेश्यर्थकृतेस्तनाभेदान्वयाऽसम्भवादिति तन्न । ईदृशादेशादेशिभावसम्बन्धाधीनादेशिस्मृतेर्भूयाद्गुरुत्वलत्वादिना यत्नानुभावकत्वस्य च कल्पने गौरवात् । वेदादिप्रयुक्ततिबाद्यन्यतमत्वेन शक्तत्वौचित्याच्च । किं च तिबादीनामेकैकत्र शक्तिरन्यत्र लक्षणया शक्तिभ्रमाद्वा बोध इत्यस्तु, त्वयापि तिबादौ शक्तिभ्रमस्वीकारात् । तिबादयो लस्यादेशा यस्य चेत्यत्र श्रुतिवचनातिरिक्तं प्रमाणमादर्शनीयम् । वचसा वचस इत्यादावनुभावकत्वेन क्लृप्तस्यादेशिनो देवेन देवस्येत्यादावादेशेन स्मरणं युक्तं तस्मात्प्रकृते संख्यावर्तमानत्वाद्यनुभावकतावच्छेदकतिप्त्वादिनैव यत्नानुभावकत्वम् । अनुभावकताया शक्ततायाश्चैकमवच्छेदकम् । एतेन लादय आदेशिनो निरर्थका एवेति वैयाकरणमतमप्यपास्तम् । आदेशित्वे मानाभावात् । लस्य वादेशां तत्त्वमित्यत्र विनिगमकाभावाच्च ।

यत्तु एकवर्णपदत्वमेव शक्ततावच्छेदकम् । अस्तु वा पदमात्रस्य चरमवर्णत्वमेव तथा, अन्यत्तु तात्पर्यग्राहकं, समुदाये शक्तत्वव्यवहारस्तु समासादाविव

गौण इति तन्न । तथा सति रूपवदादिपदस्यासाधुत्वापत्तेः । न च व्याकरणस्मृत्यादृतत्वात्तथा, शक्त्यभावे लक्षणाया अप्ययोगादर्थवत्त्वाभावे प्रातिपदिकसंज्ञाभावेन तद्व्युत्पाद्यत्वस्याप्ययोगात् । न च विजयः पराजयः इत्यादिद्योतकघटितसमुदाय इव चरमवर्णशक्त्यापि रूपवदादिसमुदाये प्रातिपदिकसंज्ञासंभवः । तत्र कृत्तद्धितसमासाश्चेति प्रातिपदिकसंज्ञाविधानात् । न चैतत्सूत्रमर्थवदिति सूत्रस्य प्रपञ्च एव न [illegible] विधायकम् । देवानित्यादेः प्रातिपदिकसंज्ञावारणाय अप्रत्यय इत्यस्य प्रत्ययतदन्ताभिन्नार्थकतया समासादौ प्रत्ययान्त्वे ततः प्रातिपदिकसंज्ञा असंभवादित्यधिकं शब्दपञ्चधरीयप्रकाशे ।

ननु अतीतेऽपि यत्ने वर्तमानत्वादिबोधकत्वेन पचतीत्यादिप्रयोगापत्तेर्वर्तमानत्वादियत्नयोरेकोच्चारणान्तर्भावेन शक्तिः पुष्पवन्तादिवत् । इत्थं च तिप्त्वादिकमेव शक्ततावच्छेदकमिति । तन्न । रथो गच्छति गमनेन रथो यते इत्यादौ वर्तमानत्वबोधानापत्तेः । अतीते यत्ने पचतीति प्रयोगापादनं चातीते व्यापारादौ रथो गच्छतीत्यादिप्रयोगापादनेन तुल्यम् । मिलितानुभावकतायास्तुल्यसमाधानं च । नहि शक्तिलक्षणाऽप्येकोच्चारणान्तर्भावेन संभवति तिप्त्वत्वाद्यनेकावच्छिन्नानन्तविषयवर्तमानत्वादौ यत्नसमन्तर्भाव्यानन्तशक्तेः कल्पनामपेक्ष्य आख्यातत्वावच्छिन्नस्य पचे उद्भूताद्यवच्छिन्नस्य वर्तमानत्वादौ शक्तिकल्पनैव लघीयसी । वस्तुतो यत्ने शक्तौ वर्तमानत्वादौ निरूढलक्षणैवेति दिक् ।

यत्नो वाच्य इति । अत्र यत्नत्वावच्छेदेन वाच्यत्वान्वयादन्वयितावच्छेदकस्य यत्नत्वस्य प्रकृते धात्वर्थान्वयप्रकारतावच्छेदकत्वलाभस्तेन व्यापारत्वजातिवादिनाऽपि यत्ने वाच्यत्वोपगमात् सिद्धसाधनाद्यवकाशः । आख्यातस्येत्यनन्तरं यत्नत्वेनेति वा पूरणीयम् । पचतीत्यादि । पाकं करोतीत्यादौ निविष्टेन करोतिना कृञ्धातुना शक्त्योभयबोधकत्वादस्य जानातीत्यादिघटकाख्यातभिन्नस्य सर्वाख्यातस्य विवरणात् । भावप्रत्ययार्थबोधादित्यर्थः । वस्तुतः करोतिनेति तृतीयाभेदेन तथा च यत्नार्थककृञ्धातुकविवरणकत्वादित्यर्थः । यच्च समानार्थकतया यस्य बोधकं तत्तस्य विवरणं, भवति हि पचतीत्यस्य चरमपदलक्षणया स्वपरत्वात्पाकं करोतीत्यस्य च चरमपदलक्षणया स्वसमानार्थकपरत्वात् तयोरभेदेनान्वयबोधः । प्रायशो विवरणस्थले बहुव्रीहिसमासोत्तरं प्रथमान्तताऽस्वीकारात् । वृक्षो महीरुह इत्यादौ प्रसिद्धवृक्षादिपदार्थे महीरुहपदवाच्यत्वादिबोधाच्च विवरणत्वम् । तदयं प्रयोगः । यत्नः यत्नत्वं च आख्यातस्य शक्यः शक्यतावच्छेदकं वा आख्यातविवरणत्वात् । शक्तत्वं तदवच्छेदकत्वं वा

योश्च संसर्गमर्यादया आश्रयत्व–प्रतियोगित्वयोर्भानसंभवात्, 'मितत्व' लक्षणाभ्युपगमेन, आख्यातस्य तु वर्तमानत्वं संख्या च यथायथमर्थोऽस्तु इत्यत आह–चैत्र इति । अन्वयाबोधादिति । धात्वर्थे कर्मतासंबन्धेन तण्डुलस्य कर्तृतानिरूपकत्वसंबन्धेन चैत्रस्यान्वयाबोधात् । एवं धात्वर्थपाकस्य कर्तृतासंबन्धेन चैत्रे कर्मतासंबन्धेन च तण्डुले अन्वयाबोधाच्चेत्यर्थः । इत्थंभूतलक्षणं ज्ञानं चैत्र इत्यादौ आश्रयतासंबन्धेन चैत्रादौ ज्ञानादेरन्वयाबोधाच्चेत्यपि द्रष्टव्यम् । एतेन पचति तण्डुल इत्यादौ कर्मतासंबन्धेन तण्डुलादेर्धात्वर्थपाकविशेष्यकत्वेनान्वयबोधवारणाय धात्वर्थस्य नामार्थविशेष्यतया अन्वयबोधस्याव्युत्पन्नत्वात्, प्रकृते च नामार्थकर्तृविशेषणतया गमनादिधात्वर्थस्यान्वये न किमपि बाधकमित्यपि प्रत्युक्तम् । एतेन पचतीत्यादौ धात्वर्थ–नामार्थयोरभेदसंसर्गेणान्वयबोधदर्शनादुक्तं भेदेनेति, अभेदातिरिक्तसंबन्धेनेत्यर्थः, अभेदस्तादात्म्यं, 'साक्षादन्वयस्य' साक्षात्त्वेनान्वयस्य, 'अव्युत्पन्नतया' शब्दाजन्यतया, नामार्थान्वितस्य विभक्त्यर्थस्य धात्वर्थे धात्वर्थान्वितस्य विभक्त्यर्थस्य च नामार्थे बोधस्य शब्दजन्यत्वादुक्तं साक्षादिति । तद्भानेनेति । आश्रयत्व–प्रतियोगित्वयोर्भानेनेत्यर्थः । अत्र प्रातिपदिकमव्ययातिरिक्तत्वेन विशेष्यं, तेन न नञर्थे भावयेदित्यत्र न्यायनये नञर्थस्य निषेधकतादिविशिष्टसंबन्धेन धात्वर्थे अन्वय । गुरुनये अनुयोगितासंबन्धेन धात्वर्थस्य नञर्थे अन्वयो नानुपपन्नः । अतएव ज्ञानवदिच्छा इत्यादावपि मत्वर्थस्य धात्वर्थे अनुयोगितासंबन्धेन प्रतियोगितया च साक्षादन्वयो नानुपपन्न । न चाभेदातिरिक्तसंबन्धेन पाकज्ञानादिप्रकारक–चैत्रादिविशेष्यक शाब्दबोध पचति चैत्र ज्ञानं चैत्र इति वाक्यात् योग्यताज्ञानादिसत्त्वेऽपि कुतो न जायते सति कारणकलापे कार्यानुत्पादस्यासंभवादिति वाच्यम् । तादृशानुपूर्वीमत्ताादृशान्वयबोधोऽनुभवसिद्धस्तादृशानुपूर्व्यास्तत्र हेतुतया तादृशविशेषकारणविरहादेव ततस्तदनुत्पादात् ।

केचित्तु धात्वर्थनिष्ठविषयतानिरूपितातादात्म्यातिरिक्तसंबन्धावच्छिन्ननिपातातिरिक्तपदार्थनिष्ठविषयतासंबन्धेन शाब्दबोधोत्पत्तिं प्रति धातूत्तरप्रत्ययजन्योपस्थितिर्विशेष्यतासंबन्धेन कारणम् । यद्वा तादृशविषयतानिरूपितोक्तसंबन्धावच्छिन्ननामार्थनिष्ठविषयतासंबन्धेन शाब्दबोधोत्पत्तिं प्रति निपातजन्योपस्थितिर्विशेष्यतासंबन्धेन कारणमतो न तस्मात् तादृशबोध. इत्याहुः । तदसत्, धात्वर्थनामार्थयोरनुगतानतिप्रसक्तयोर्दुर्वचत्वादिति ध्येयम् ॥ २ ॥

( राम० ) एतन्मतं दूषयितुं स्वमतं दर्शयितुमाह—अन्यदन्यत्वेत्यादि । अन्यदीत्यादिरमारम्य नन्वाइत्यन्त एको ग्रन्थ । स्पर्शयनगमनानुकूलनोदनादिभाति निश्चले हस्तादावित्यर्थः । ननु गमनोपहितव्यापार एव गच्छतीत्यस्यार्थो वाच्य इति नोक्तदोष इत्यत आह–जानातीति । 'गच्छतीत्यादि' इति उदाहरणबाहुल्यप्रदर्शनाय । ननु जानातीत्यादौ ज्ञानानुकूलो व्यापार आत्मनि

मनोयोगादिरेव प्रतीयतामित्यत आह—विघटत इति । धात्वर्थस्य वर्तमानकाल-संबन्धादिरनुकूलव्यापारस्य गमनादौ बाधात् गगनं विघटत इत्यन्वयानुपपत्ति-रित्यर्थः । निद्रातीति । मेध्यानाममनाडीविशेषेण मनसः संयोगो निद्रा, स च संयोगः आत्मनि स्वाश्रयमनःप्रतियोगिकविलक्षणसंयोगलक्षणपरम्परासंबन्धेन वर्तते इत्यर्थं पुरुषो निद्रातीति प्रयोग उपपद्यते । विलक्षणसंयोगश्च तत्तदात्मीयादृष्टाद्रृष्टमनसि तत्तदात्मीयत्वाव्यवहारनियामकतया सिद्धः केवलमात्म–मनसोरेव । एवं मनःप्रतियोगिकसंयोगेन मनो न मनसीति मेध्या निद्राति मनो निद्राति इत्यादयो न प्रयोगाः । न च निरुक्तपरम्परासंबन्धेन मेध्यान्तःकरणसंयोगो यथा आत्मनि वर्तते तथा तदनुकूलव्यापारो मेध्याक्रिया मनःक्रिया वा स्वजन्य-मेध्यान्तःकरणसंयोगाश्रयमनःप्रतियोगिकविलक्षणसंयोगेनात्मनि वर्तते इत्यत्र क्रियानुकूलव्यापारबोधः संभवत्येवेति वाच्यम् । तादृशपरम्परासंबन्धेन तदनु-कूलव्यापारस्यात्मनि विशिष्टबुद्ध्यभावेन तादृशपरम्परायाः संबन्धत्वे मानाभा-वात् । मेध्यान्तःकरणसंयोगस्य च तत्परम्परासंबन्धेनात्मनि विशिष्टबुद्ध्या तत्-परम्परायाः संबन्धत्वमावश्यकमन्यथा स्वनिद्रायाः विशिष्टबुद्ध्यनुत्पादापत्तेः । अत एव यत्र प्रयत्नयोग्यनाड्यवच्छेदेन प्रयत्ने जाते तेन प्रयत्नेन तन्नाडीकर्म जायते तेन च कर्मणा तन्नाड्या मनसि मेध्यायां वा नोदनाभिघातौ जायेते ततो मनसो मे-ध्याया वा कर्मोत्पत्तिः तदनन्तरं उत्तरदेशे मनसि मेध्यायां वा मेध्याया मनसा वा संयोगस्तत्र मेध्या–मनःसंयोगानुकूलायास्तत्तन्नाड्यवच्छिन्नकृतेरात्मनि संभ-वेन कथं तादृशकृतेरप्रतीत्यभिधानमित्यपास्तम् । ईदृशानुकूलत्वसंबन्धेन धात्व-र्थस्याख्यातार्थे अन्वयविरहात् । अन्यथा तण्डुलक्रयणादनुकूलकृतावपि तुल्यन्यायेन पाकादिरनुकूलत्वसंबन्धेनान्वयापत्त्या अपचत्यपि तादृशक्रयकर्तरि पचतीति प्र-त्ययप्रसङ्गात् । अत्र च क्रियानुकूलकृति–व्यापारयोरप्रतीतेराश्रयत्वे निरूढलक्षणे-त्यर्थः । गच्छतीत्यादौ कर्त्राख्याते आश्रयत्वे निरूढलक्षणा वाच्येत्यर्थः । क्रियानुकू-लकृति–व्यापारयोः प्रतीतौ बाध एव बोधः स्यादिति निरूढलक्षणायां मानाभाव एव स्यादित्यप्रतीत्यन्तमुक्तं, लक्षणायाः निरूढत्वञ्चानादितात्पर्यानादिप्रयोगयोः सामानाधिकरण्यम् । न चैवमनादितात्पर्यानादिप्रयोगयोः सत्त्वे घटादौ घटप-दादिवत् कर्त्राख्यातस्याप्याश्रयत्वे शक्तिरेव कल्प्यतामिति वाच्यम् । यत्र लघ्वर्थे गुर्वर्थे चानादितात्पर्यानादिप्रयोगौ तुल्यौ तत्र लाघवेन लघ्वर्थे शक्तिर्गुर्वर्थे निरूढलक्षणेति सर्वसिद्धम्, अन्यथा नीलादिपदस्य नीलरूपवादाविव नीलरूपवद-दावपि शक्तिप्रसङ्गात् अनादितात्पर्यानादिप्रयोगयोरुभयत्र तुल्यत्वात्, तथाच प्रकृतेऽप्याख्यातस्य कृतौ आश्रयत्वे च तयोस्तुल्यत्वे कृतावेव शक्तिकल्पनं युक्तं न त्वाश्रयत्वे, आश्रयत्वस्य जातीतरत्वेन कृतित्वजात्यपेक्षया गुरुत्वात् । सामा-न्यस्य–विशेषस्य च जातित्वमदितरत्वे तथाऽप्यापि लाघव–गौरवपदार्थत्वादिति भावः । इत्यत्र निरूढत्वं शक्तिकल्पनप्रमनिवारणाय निरूढेत्युक्त, तथाच निरू-

द्वापि अनादितात्पर्यानादिप्रयोगसमानाधिकरणाच्चाश्रयत्वांशे आख्यातस्य शक्तिकल्पनेन न तु शक्तिद्वयकल्पनेति निरूढलक्षणेत्यस्यार्थो बोध्यः, अन्यथा निरूढत्वप्रदर्शनस्यानुपयोगित्वापत्तेरिति दिक्। गच्छतीति, गच्छतीत्यादिप्रयोगनिरूढत्वमेव निरूढत्वमित्यपि कश्चित्। ननु गच्छतीत्यादौ क्रियानुकूलकृतिव्यापारयोरन्यतरस्या आख्यातस्य शक्तिव्यापारयोरन्यतमत्वाभाव एवाश्रयत्वे न तु तदाश्रयत्वे निरूढलक्षणेत्यत आह,—गत्यादीति। आदिपदेन ज्ञानादिपरिग्रहः, तदनुरूपं आश्रयत्वं, मात्रपदस्य संपातायातं, गत्याश्रयत्वप्रतीतेरेव तदाश्रयत्वलक्षणासाधकत्वात्। यद्वा अननुगत्या आश्रयत्वप्रतीतिमात्रं यदि आश्रयत्वनिरूढलक्षणासाधकं तदा गङ्गायां घोष इत्यादौ तीरादिबोधकत्वेन गङ्गापदादेरपि तीरादौ निरूढलक्षणापत्तिरित्याशङ्कानिरासाय तु मात्रपदमुक्तं, तथाच गङ्गायां घोष इत्यादौ गङ्गापदात् कदाचित् तीरस्य, कदाचिच्च शृङ्गादिबोध इत्येवमाद्यनादिप्रयोगानादित्वस्यैकरूपेणाभावेन न निरूढलक्षणा। गच्छतीत्यादौ सर्वस्मिन् काले सर्वेण पुरुषेण गत्याश्रयत्वमेव प्रतीयते न त्वर्थान्तरमिति तदाश्रयत्वे निरूढलक्षणेत्यर्थः।

ननु अचेतनस्थलीये रथो गच्छतीत्यादौ गत्याश्रयत्वं सचेतनस्थलीये चैत्रो गच्छतीत्यादौ च गमनानुकूलकृतिरर्थः, तथापि आत्मा गच्छतीत्यादौ समवायेन चैत्रो गच्छतीत्यादावनवच्छेदकतासंबन्धेनेति, तदुच्यते। तथाश्रयत्वस्य भेदेन शक्तिभेदकल्पनापत्तेस्तस्मादेतत्सर्वसाधारणमाश्रयत्वमेव गच्छत्यादौ आख्यातार्थः। आश्रयतात्वञ्च सर्वाश्रयत्वसाधारणमेकं, तेन च रूपेण क्वचित् समवायसम्बन्धावच्छिन्नं क्वचिदवच्छेदकतासम्बन्धावच्छिन्नं क्वचित् परम्परासम्बन्धावच्छिन्नमाश्रयत्वं प्रतीयते, आद्यं चैत्रो गच्छतीत्यादौ, द्वितीयं चैत्रो जानातीत्यादौ, तृतीयं चैत्रो विजानातीत्यादौ। ननु घटो नश्यतीत्यादौ नाशानुकूलकृतिव्यापारयोर्बाधादेव नान्वयः। न च संयोगादिनाशानुकूलव्यापारस्य क्रियादेर्वक्तविवक्षितत्वेन न तत्र बाध, तथा सति निश्चलेऽपि ताडने घटे अयं घटो नश्यतीति प्रयोगप्रसङ्गात्। एतेन गच्छतीत्यादौ गत्याश्रयत्वस्येव नश्यतीत्यादावपि नाशाश्रयत्वमर्थ इत्यपास्तम्। तथासति विनाशे संयोगादिस्थलेऽपि अयं नश्यतीत्यादिप्रयोगप्रसङ्गादित्यत आह—नश्यतीत्यादावपीति। प्रतियोगित्व इति। न चैवमपि भाविनाशप्रतियोगितामादाय विनाशेऽपि घटे नश्यतीति प्रयोगापत्तिः, आख्यातार्थवर्तमानत्वस्य धात्वर्थनाशान्वयित्वस्वीकारात्। एवमन्यद्बोध्यम्। न च गच्छतीत्यादौ गत्याश्रयतासंबन्धेन नश्यतीत्यादौ प्रतियोगितासंबन्धेन नाशस्य च प्रथमान्तपदार्थे एव साक्षात् प्रकारतया अन्वयोऽस्तु किमाश्रयत्व-प्रतियोगित्वयोर्निरूढलक्षणयेत्यत आह—धात्वर्थेति। तथाच धात्वर्थगत्यादेराश्रयतादिसंबन्धेन साक्षात्प्रथमार्थेऽन्वयस्य धात्वर्थस्याख्यातार्थनिर्विशेषतासंभवात् तत्र तदाश्रयत्वादौ निरूढलक्षणाप्रदर्शनमित्यर्थः, स्तोकं पचतीत्यादौ क्रियाविशेषणस्य स्तोकस्याभेदसंबन्धेन धात्वर्थे पाके साक्षादन्वयात्तु—भेदेने-

वैशिष्ट्यप्रकारकान्वयबोधानङ्गीकारात् । एवं गच्छतीत्यादौ प्रतियोगित्वलक्षणानङ्गीकारे घटो न गच्छतीत्यादौ नञर्थान्वयानुपपत्तिः। तथाहि यद्याश्रयतासंबन्धेन गमनस्याभावः प्रत्येतव्यस्तदा स्ववृत्तिसंयोगादिनाऽस्य घटे सत्त्वेन बाधापत्तिः। अथ प्रतियोगित्वासंबन्धेन गमनस्याभावः प्रतीयतामिति चेत्, न, निरूपकत्वादिवत् प्रतियोगित्वादेः प्रतियोगितावच्छेदकसंबन्धत्वविरहात्। प्रतियोगित्वे लक्षणास्वीकारे च गमनप्रतियोगित्वस्य स्वरूपसंबन्धेनाभाव एव प्रतीयते तत्र च न कोऽपि दोषः। एवं घटं जानातीत्यादौ कर्मत्वस्य केनाऽसंबन्धत्वे घटं न जानातीत्यादौ नञर्थान्वयानुपपत्तिर्विषयत्वस्य प्रतियोगितावच्छेदकसंबन्धत्वाभावादेवमन्यद्बोध्यमित्याहुः।

नव्यास्तु चैत्रो ज्ञानमित्यादौ समवायसंबन्धेन चैत्रविशेष्यकज्ञानप्रकारकान्वयबोधवारणाय चैत्रविशेष्यक-ज्ञानप्रकारकशाब्दबुद्धिं प्रति प्रकृत्यर्थानुत्तरविभक्तिजन्याश्रयत्वोपस्थितित्वेन हेतुता वाच्या, तथाच चैत्रो जानातीत्यादौ आश्रयत्वलक्षणाविरहे तादृशोपस्थितिविरहादेव नान्वयः इत्याश्रयत्वलक्षणाङ्गीक्रियते, एवं पाकः तण्डुल इत्यादौ पाकविशेष्यक-तण्डुलप्रकारकान्वयबोधवारणाय पाकविशेष्यक-तण्डुलप्रकारकशाब्दबुद्धिं प्रति तण्डुलपदोत्तरविभक्तिजन्य-कर्मत्वाद्युपस्थितित्वेन हेतुता वाच्येति तदभावादेव चैत्रः पचति तण्डुल इत्यादौ कर्मत्वादिसंबन्धेन पाकादौ तण्डुलप्रकारकान्वयबोधो न जायते, यदा च तत्रापि तण्डुलपदोत्तरप्रथमाविभक्तौ कर्मत्वादिलक्षणा क्रियते तदा जायत एव पाकादौ तण्डुलप्रकारको बोधः। नन्वेवं तण्डुलं पचतीत्यादौ विभक्तिजन्य-कर्मत्वोपस्थितिसहकारेण पाकादौ कर्मतासंबन्धेन तण्डुलप्रकारकान्वयबोधोऽस्तु न तु कर्मताविशेष्यक-तण्डुलप्रकारको बोधः। तण्डुलं पचतीत्यादिसमभिव्याहारस्य पाकविशेष्यकतण्डुल-कर्मकत्वप्रकारकशाब्दत्वापेक्षया लाघवेन पाकविशेष्यककर्मतासंसर्गकतण्डुलप्रकारकशाब्दत्वादीनां कार्यतावच्छेदकत्वकल्पनाया एव न्याय्यत्वादिति चेद् सत्यमेतत्, यदि नाऽनुभवविरोधो भवेदिति। वयं तु केवलं तण्डुलमित्यादौ कर्मत्वे तण्डुलप्रकारकबोधस्याऽनुभवसिद्धतया तण्डुलमिति वाक्यस्य कर्मताविशेष्यकतण्डुलप्रकारकशाब्दत्वं कार्यतावच्छेदकं वाच्यं, तथाच तण्डुलं पचतीत्यादावपि सामग्रीबलादेव तण्डुलकर्मकत्वेन पाकविशेष्यकान्वयबोधोऽवश्यं वाच्यः। न च कर्मत्वं तण्डुलीयं पाकस्तण्डुलीय इत्यन्वयबोधः स्यादिति वाक्यार्थबोधे कर्मत्वविशेष्यकत्वप्रवेशे गौरवादिति वाच्यम्। तथा सति तण्डुलं पचतीत्यादौ एकवाक्यताभङ्गप्रसङ्गात् विषयभेदस्य वाक्यभेदकत्वात्। किञ्च चैत्रो मांसं पचति न तण्डुलमित्यादौ पाके नञर्थतण्डुलकर्मत्वाभावस्य प्रतीत्यर्थं कर्मतांशे तण्डुलस्य प्रकारता वाच्या कर्मत्वादेर्वृत्त्यनियामकतया कर्मतासंबन्धावच्छिन्नप्रतियोगिताक-तण्डुलाभावबोधस्याऽसंभवात् आश्रयत्वादिसंबन्धावच्छिन्नप्रतियोगिताक-तण्डुलाभावस्याऽभ्युपगमे च तण्डुलपाकस्थलेऽपि तथा प्रयोगप्रसङ्गादिति वदामः।

ननु जानातीत्यादिचतुष्टयस्य व्यापारे आख्यातस्य लक्षणयैवोपपत्तौ तत्राश्रयत्वे लक्षणाकल्पनमनर्थकमिति चेन्न । अत्यन्तव्यापारे (?) लक्षणाकल्पनापेक्षया आश्रये तत्कल्पनाया लघुत्वात् । विद्यते निद्रातीत्यादौ आख्यातस्य व्यापारबोधकत्वप्रसक्तिरेव न वर्तमानकालसम्बन्धित्वस्य निद्रात्वधर्मस्य सिद्धात्मनःसंयोगरूपस्य निद्रापदार्थस्य चानुकूलो यो व्यापारस्तत्पुरुष्यादावभावादिति भावः ।

ननु जानातीत्यादौ आख्यातस्य आश्रयत्वे लक्षणाकल्पने चैत्रोऽयं घटं जानातीति प्रयोगकाले घटज्ञानाभाववति मैत्रे मैत्रोऽयं घटं जानातीति प्रयोगापत्तिः । एककालीनत्वसम्बन्धावच्छिन्नतदाश्रयत्वस्य तदानीं मैत्रेऽपि सत्वात् तत्तत्सम्बन्धावच्छिन्नाश्रयत्वे लक्षणाकल्पने पुनरतीव गौरवात् । तदपेक्षया व्यापारे लक्षणाकल्पनमेव न्यायोऽतिप्रसङ्गस्य तूपदर्शितरीत्या वारणीयत्वात् । यदि चाख्यातस्याश्रयत्वत्वेनाश्रयत्वसामान्ये लक्षणा जानातीत्यादौ चाश्रयतैवत्वरूपेण समवायसम्बन्धावच्छिन्नाश्रयत्वस्यैव बोधस्तथैव कार्यकारणभावकल्पनात्तथापि व्यापारे लक्षणापेक्षया गौरवापत्तिरित्यत आह—गत्यादिमत्त्वेति । आदिना ज्ञानादिमत्त्वपरिग्रहः । मात्रपदेन व्यापारव्यवच्छेदः । तथा चानुभवानुरोधेनागत्या तत्तत्सम्बन्धावच्छिन्नाश्रयत्वे लक्षणा तथाविधगुरुतरकार्यकारणभावो वा कल्प्यत इति भावः ।

केचित्तु ननूपदर्शितस्थलेषु व्यापारस्यैवाश्रयत्वस्याप्यप्रतीतेरलं तत्र लक्षणयेत्यत आह—गत्यादिमत्त्वेतीत्याहुः । नन्वाख्यातस्य मुख्यार्थबाधस्थले सर्वत्राश्रयत्वे लक्षणाकल्पनं न सम्भवति । घटो नश्यतीत्यादौ प्रतीत्यसम्भवात् । घटस्य नष्टत्वेन नाशाश्रयत्वाभावात् प्रतियोगितासम्बन्धेन नाशत्वावच्छिन्नं प्रति प्रतियोगितादात्म्यसम्बन्धेन हेतुत्वानुरोधेन नष्टस्यापि प्रतियोगितासम्बन्धेन नाशाश्रयत्वास्वीकारे पुनर्लाघवात् प्रतियोगित्व एव लक्षणाकल्पनस्योचितत्वादित्यतस्तथैव आह—नश्यतीत्यादौ चेति । निरूढेति अनादिसिद्धेत्यर्थः ।

ननूपदर्शितबहुप्रयोगसत्त्वे तत्र शक्तिरेव किमिति न कल्प्यत इति चेत् यत्नत्वरूपलघुशक्यतावच्छेदकसम्भवेन तत्तत्सम्बन्धघटिताश्रयत्वत्वावच्छिन्ने शक्तिकल्पने गौरवज्ञानरूपप्रतिबन्धकस्य दत्तजलाञ्जलि प्रसज्येत । न चाश्रयत्वस्यातिरिक्तत्वमभ्युपेत्य तदवच्छिन्नशक्तिकल्पने बाधकाभाव इति वाच्यम् । तर्हि व्यापारत्वमतिरिक्तमभ्युपेत्य तदवच्छिन्ने शक्तिकल्पनस्योचितत्वात् । न चेष्टापत्तिः । तथा सति विनिगमनाविरहादनन्ततद्धर्मावच्छिन्ने शक्तिकल्पनापेक्षया लाघवात्कृतियत्नत्वावच्छिन्न एवाख्यातस्य शक्तिकल्पने बाधकाभावात् । एतेन समवायित्वमतिरिक्तं स्वीकृत्य तदवच्छिन्ने आख्यातस्य शक्तिरस्त्वत्र लक्षणेत्यपा-

स्तम् । उपदर्शितविनिगमनाविरहेण तत्तदनन्तधर्मावच्छिन्ने शक्तिकल्पनाप्रयुक्तगौरवस्य जागरूकत्वादित्यग्रे वक्ष्यामः ।

ननु चैत्रो जानातीत्यादावाश्रयत्वे निरूढलक्षणाकल्पनं निरर्थकमेव । तत्राश्रयता सम्बन्धेन चैत्रे ज्ञानरूपधात्वर्थस्यान्वयेनैवोपदर्शितान्वयबोधोपपत्तेः । तत्राश्रयत्वप्रकारकानुभवस्त्वसिद्ध एवेति चिन्तामणिकारमते दूषणमाह—**चैत्र पचतीत्यादि । अन्वयबोधादिति ।** चैत्र पचति तण्डुल इत्यादौ कर्मतासम्बन्धेन पाके तण्डुलस्य, मैत्र पच्यते तण्डुल इत्यत्र पाके कर्तृतासम्बन्धेन मैत्रस्यान्वयानुभवादित्यर्थः । **धात्वर्थप्रातिपदिकार्थयोरित्यादि ।** धात्वर्थनामार्थयोरभेदातिरिक्तसाक्षात्सम्बन्धेनान्वयबोधस्याव्युत्पन्नतयेत्यर्थः । अत्र स्तोकं पचतीत्यादावभेदसम्बन्धेन धात्वर्थे नामार्थस्तोकस्यान्वयाद्व्युत्पत्तिभङ्गोऽतोऽभेदातिरिक्तेति । ननु तत्र विशेषणविभक्तेरेवाभेदोऽर्थस्तत्रैव स्तोकस्यान्वयोऽभ्युपेयते तथाच तत्राभेदातिरिक्तत्वविशेषणानुपादानेऽपि न दोष । नामार्थप्रत्ययार्थयोरेव तत्रान्वयबोधस्योत्पन्नत्वादिति चेत् । सत्यम् । विशेषणविभक्तेः साधुत्वार्थकत्वेऽभेदार्थकत्वासम्भवात् । तस्या अभेदार्थकत्वेऽपि लुप्तविभक्तिमननुसन्धाय स्तोक पाक इत्यादावभेदसम्बन्धेन पाके स्तोकान्वयबोधस्यानुभवसिद्धतया तत्रैवाभेदातिरिक्तत्वविशेषणव्यावृत्तिदानसम्भवात् । तत्र लुप्तविभक्तेरनुसन्धानं विना शाब्दबोधानङ्गीकारे गत राजपुरुष इत्यादौ राजपदस्य राजसम्बन्धिनि लक्षणया तत्रापि तथा वक्तुं शक्यत्वात् । तण्डुलं पचतीत्यादौ पाके तण्डुलकर्मत्वस्यैव कर्मतासम्बन्धेन तण्डुलस्यापि बोधोत्पत्त्या तत्र व्युत्पत्तिभङ्गप्रसङ्गवारणाय **साक्षादिति ।** नामार्थधात्वर्थोभयान्वितविभक्त्यर्थातिरिक्तेत्यर्थः । ननु तथापि 'न कलञ्जं भक्षयेत्' इत्यत्र विध्यर्थबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वाविच्छिन्नत्वाभावस्य धात्वर्थे कलञ्जभक्षणादावन्वयात्तत्रैव व्युत्पत्तिभङ्गपरिहारोऽशक्य इति चेन्निपातातिरिक्तत्वं नाम्नि विशेषणीयम्, स्वीकुर्वतां वा नञ्पदस्याभाववति लक्षणा, तस्याभेदसम्बन्धेन धात्वर्थे अन्वय इति । **सम्बन्धमर्यादयेत्यादि ।** चैत्रो जानातीत्यादौ धात्वर्थनामार्थयोः सम्बन्धमर्यादया चाश्रयत्वस्य भानासम्भवादित्यर्थः । तथा चैतादृशव्युत्पत्त्यनुरोधेन नामार्थनिष्ठाभेदातिरिक्तसम्बन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिपदनिरूपितवृत्तिज्ञानजन्योपस्थितेः प्रकारतासम्बन्धेन हेतुत्वं कल्पनीयम् । एवं धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिपदनिरूपितवृत्तिज्ञानजन्योपस्थितेः प्रकारतासम्बन्धेनेत्यपी-

ति न चैत्रो जानाति इत्यादावाश्रयतासम्बन्धेन धात्वर्थज्ञानस्य नामार्थे अन्वयबोधसंभव इति भावः ।

अथ चिन्तामणिकारमतानुयायिनः—चैत्रः पचति तण्डुलम् इत्यादौ कर्मतासम्बन्धेन तण्डुलस्य पाके अन्वयबोधवारणाय नामार्थनिष्ठतथाविधप्रकारतानिरूपितविशेष्यतावच्छेदकतासंबन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति विभक्तिपदनिरूपितशक्ति(वृत्ति)ज्ञानजन्योपस्थितेः प्रकारतासम्बन्धेन हेतुत्वकल्पनमस्तु, धात्वर्थनिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति तथाविधोपस्थितेः हेतुत्वकल्पनं निष्प्रामाणिकत्वात् नादरणीयम् । तथा च चैत्रो जानातीत्यादावाश्रयतासम्बन्धेन धात्वर्थस्य नामार्थेऽन्वयबोधे बाधकाभावात् आश्रयत्वे आख्यातस्य निरूढलक्षणाकल्पनं किमिति तु न जानीमहे । "तन्वाख्यातस्य आश्रयत्वे लक्षणानङ्गीकारे जानातीत्यादावाश्रयत्वप्रकारकान्वयबोधानुभवापलापप्रसङ्ग इति चेत्, प्रायः समानानुभवबलात्तथा बाधकमुद्भावयसीत्याहुः ।

अत्र विवदन्ते बहवः—जानातीत्यादावाख्यातस्य घटादौ स्वारसिकलक्षणाज्ञानकाले ज्ञानीयो घटादिरिति शाब्दबोधोत्पत्त्यर्थं घटादिविशेष्यकज्ञानप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति ज्ञाधातुसमभिव्याहृताख्यातज्ञानजन्यघटाद्युपस्थितेर्हेतुत्वकल्पने घटत्वपटत्वादिभेदेनानन्तकार्यकारणभावकल्पनापत्त्या गौरवान्तदपेक्ष्य तदनिवेश्य ज्ञाननिष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकतासम्बन्धेन शाब्दबुद्धिं प्रति आख्यातपदनिरूपितवृत्तिज्ञानजन्योपस्थितेः प्रकारतासम्बन्धेन हेतुत्वकल्पनैव ज्यायसी । तथा च तादृशक्लृप्तकार्यकारणभावात् कथं चैत्रो जानातीत्यादावाश्रयतासम्बन्धेन चैत्रे ज्ञाधात्वर्थस्यान्वय इति तत्राख्यातस्याश्रयत्वे लक्षणावश्यकीति । "यत्तु घटत्वपटत्वादिकमनिवेश्य तथाविधकार्यकारणभावकल्पने ज्ञानीयो घट इति योग्यताज्ञानवत्तथाविधाख्यातपदजन्यघटोपस्थितिदशायां ज्ञानीयो घट इति शाब्दबोधस्य समवायसंबन्धेन आत्मन्यापत्तिर्दुर्वारा, यदि च विशेष्यतावच्छेदकनिष्ठप्रत्यासत्त्या शाब्दबुद्धियोग्यताज्ञानयोरपि कार्यकारणभावः कल्प्यते तथापि भिन्नविषयकानुमितिसामग्र्यभावरूपकारणताबलात्तदा तथाविधशाब्दबोधापत्तेरात्मनि ब्रह्मणोऽपि तु समाधेयतेत्यवश्यं घटपटत्वादिकं निवेश्य तथाविधसमभिव्याहारज्ञानजन्योपस्थितिशाब्दबोधयोः कार्यकारणभावकल्पनमिति किं बाधकम् । चैत्रो जानातीत्यादौ चैत्रे आश्रयतासंबन्धेन ज्ञानस्यान्वय इति तन्न, उपदर्शितशाब्दबोधपदजन्योपस्थित्योर्विषयभेदेन कार्यकारणभावकल्पने तत्तद्विषयकत्वेः सह विनिगमनाविरहेण कार्यकारणभावानन्त्यात् कार-

**एवेति** । तज्जनकादृष्टजनककृतेस्तज्जनकत्वे प्रमाणाभावादेवेत्यर्थः । **क्षित्यादेरि-त्यादि** । क्षिति सकर्तृका कार्यत्वादितीश्वरानुमाने इत्यर्थः । **तज्जनकेति**, क्षि-त्यादिजनकेत्यर्थः । *अर्थान्तरप्रसङ्गोऽपीति*, इदमापातत तत्र सकर्तृकत्वस्य अदृष्टाद्वारककृतिजन्यत्वार्थकतयानुपपत्त्यभावादिति ।

ननु कृतीष्टसाधनताया विध्यर्थत्ववादिगौडमते तज्जनकादृष्टजनककृतेरपि तज्जनकत्वस्य वेदबोधितत्वेन दुरपह्नवत्वात्कथमतिप्रसङ्गोद्धार इत्यत आह—**भावे चेति** । तज्जनकादृष्टजनककृतेस्तज्जनकत्वे प्रमाणसद्भावे चेत्यर्थः । तादृशकृतिवारणायेति, तादृशकृतिकाले तथाविधप्रयोगवारणायेत्यर्थः । त्वयापीति । जनकमात्रे शक्तिवादिनापि इत्यर्थः । ननु जनकयत्ने आख्यातस्य शक्तिकल्पने शक्यतावच्छेदकगौरवात्तदपेक्ष्य केवलयत्नत्वविशिष्टे शक्तिकल्पनस्योचितत्वात्तथाह—**यत्नमात्रमिति** । यत्नत्वविशिष्टमात्रमित्यर्थः । न चाख्यातस्य यत्नत्वविशिष्टमात्रवाचकत्वे आख्यातपदयत्नपदयो पर्यायतापत्तिः तच्छक्यतावच्छेदकावच्छिन्नशक्तत्वस्य तत्पर्यायतापदार्थत्वादिति वाच्यम् । इष्टत्वात् । ननु विषयत्वस्य धात्वर्थसंसर्गताभ्युपगमे पाकानुपधायकपाकगोचरयत्नवति पुरुषे पचतीति प्रयोगापत्तिरित्यत आह—**जनकत्व चेति** । फलोपधायकत्व चेत्यर्थः । फलोपधायकत्व च तत्तद्व्यक्तिव्यावच्छिन्नजनकत्वमतिरिक्त चेत्यन्यदेतदिति भावः ॥ ४ ।

( जय० ) एव यत्नस्यानुमानिकत्वे । तस्य यत्नस्य यत्नत्वेनापदार्थत्वात् । अध्याहारवादिमताश्रयेणेनापदार्थेऽप्यध्याहृतयत्ने पदार्थसंभावितमन्वय व्युत्पत्तिविरोधेन प्रत्याचष्टे—**अन्यत्रेति** । चैत्र पचतीत्यादेरन्यत्र जानातीत्यादौ, धात्वर्थक्रियायां पाठे पचतीत्यादौ, स्वार्थव्यापारे आख्यातसामान्यस्य वर्तमानत्वाद्यतत्त्वाद्यनुभावकत्वस्य क्लृप्तत्वात् । तदुभयभिन्नेऽध्याहृतयत्नेऽध्याहारवादिमतेऽपि नान्वय । आश्रयत्वादिबोधकाख्यातजन्ये वर्तमानत्वादिप्रकारकशाब्दबोधे धातुजन्योपस्थितेर्व्यापारबोधकाख्यातजन्ये । तदाख्यातजन्यव्यापारोपस्थितेः समानविशेष्यत्वप्रत्यासत्त्या कारणत्वकल्पनरूपव्युत्पत्तिविरोधापत्तेरिति भाव । **यत्नविगमेऽपीति** । वह्निसंयोगाद्यात्मकव्यापारवति काले पाकानुकूलयत्नाभावाद्व्यभिचार इत्यर्थ । ननु पाकक्रियाफलोपधानावच्छिन्नव्यापारेण तदनुकूलो यत्नोऽनुमेय । किंच नास्त्येव व्यभिचारोऽत्तत ईश्वरयत्नसत्त्वादत आह—**धर्मीति** । ननु चैत्र पाकजनकयत्नवान् पाकजनकव्यापारजनकत्वादित्यनुमानेन सा प्रतीयेतेत्यत आह—**व्यधिकरणस्येति** । व्यधिकरणस्य वह्निसंयोगादे सत्त्वाद्यद्वति वह्न्यादौ दैशिकव्याप्तेर्व्यभिचार इति भाव । अचेतनेऽपि

चैत्रादिसङ्केतसत्त्वादित आह—चैत्रव्यापिनेति । वस्तुत आदिपदव्यवस्थाकथन-मेतत् । तेन, पाकजनकव्यापारेण । शोभन इति । अत्र शब्दाच्छोभनत्वं प्रतीयते तद्विशिष्टे पाकजनकव्यापारवत्त्वं च । शोभनत्वं बहुआदावपीति व्यभि-चारस्तदवस्थ एव । चैत्रत्वादिप्रतीतिस्त्वेतादृशवाक्यप्रयोगकाले न शब्दात् प्रमा-णान्तरकृतनियमेति भाव ।

ननु व्यभिचारिहेतुनाऽपि व्यभिचाराग्रहदशायामन्ततो व्यभिचारस्थाना-न्यत्वविशेषितेन वा तेन तदनुमाय वर्तमानत्वाकेन कारणतयाक्षितवर्तमानप-त्नस्या तता मानसोऽपि चैत्रादौ विशिष्टबोध स्यादिति चेन्न । व्याप्त्यादिमति-सधान विनाऽपि तादृशयत्नानुभवात् अन्यथा वैशेषिका एव विजयेरन् । मनसा च तन्निर्णय सर्वत्र न सम्भवति सन्देहसामग्रीसत्त्वात् । किं च तदंशे शाब्दत्वानुभवो नोभयथाऽपीति दिक् ।

तत्र शोभन पचतीत्यादौ, यत्नानुभावकप्रमाणान्तराभावशालिनि । अथा-नुकूलव्यापारे शक्तावपि लक्षणया यत्नप्रतीतिर्वाच्या । तथा च लाघवाद्यत्न एव शक्तिरस्तु । कथ पचतीत्यादौ व्यापारप्रतीतिर्लक्षणयेत्यभिप्रेत्य समाधत्ते—नैवमिति । लाघवेनेति । व्यापारत्वस्य प्रकृते जन्यत्वाद्यात्मकस्यापि यत्नत्वा-पेक्षया गुरुत्वमिति भाव । पतति स्पन्दते इत्यादौ च पतनस्पन्दनानुकूल-गुरुत्ववेगयोर्न तत्त्वेन प्रतीति किं तु व्यापारत्वेनेति गुरुत्ववेगत्वयोर्नातित्वेऽर लाघवमीरिचित्करम् । भवतु वा कदाचित्तयोरपि प्रतीतिर्विनिगमकाभावात्तयो रप्याख्यातशक्यतावच्छेदकत्वम् । अन्यथा यत्नत्वमपि तथा न स्यान्नियमतस्त-त्रापि रूपेणाप्रतीतेस्तथाऽपि न व्यापारत्वस्य तथात्वमित्यत्र तात्पर्यं बोध्यम् ।

शङ्कते—यत्नमिति । यत्नत्वमित्यर्थ । जनकयत्नत्वे प्रविष्टस्य जनकत्व-स्यैव शक्यतावच्छेदकत्वादिति भाव । अनुगुणान्तरमाह—तथा चेति । अचेतनेऽपीति । तण्डुलादावपि पाकजनकवह्निसंयोगादिमत्त्वादिति भाव । ननु यत्नशक्तावप्यदृष्टद्वाराऽदृष्टजनककृते पाकजनकत्वात्तदापत्तिस्तुल्येत्यत आह—पाकजनकादृष्टजनकेति । अत एव, स्वजनकादृष्टजनककृते स्वजनकत्वा-भावादेव अर्थान्तरमुद्देश्यासिद्धि । तत्र ह्यनन्तादृष्टजनककृते क्षितिजनकत्वक ल्पनापेक्षया क्षितिजनकत्वेनैव कृतिकल्पनेन लघीयसीति लाघवादेककृतिसिद्धौ तद्वाश्रयेश्वरकल्पन फलमुपगच्छ दोषायेतीश्वरसिद्धि । स्वजनकादृष्टजनककृते स्वजनकत्वे ॥ कृतेन तत्कृतिजन्यत्वेनैव साध्यसिद्धौ नेश्वरसिद्धि स्यादिति भाव ।

कर्त्तृ-कर्मणी लकारवाच्ये, चैत्रः पचति पच्यते तण्डुल इति सामानाधिकरण्यानुरोधात् अन्यथा पचतीत्यत्रापि कर्त्तरि तृतीया पच्यत इत्यत्र कर्मणि द्वितीया स्यात् तयोरनभिहिताधिकारीयत्वात्

ननु तत्तादृशद्वारकस्कृतिजन्यत्वस्य यत्र समवायेन कार्यं तत्र विषयता कृति नियमेन प्रत्यासत्तिनियतजन्यत्वस्याच्च घटादिष्वनुल्यसाध्यत्वात्तत्सिद्धिः स्यात् अत आह—भावे यतीति। स्वयापीति। तथाऽपि अदृष्टाद्वारकत्वेन तज्जनककृति धारण समानमिति तदपेक्षया यत्नत्वनिवेश एव लघीयानिति भावः। ननु निरूपितत्वविशेषसंसर्गेण पाकादेर्धात्वर्थस्याख्यातार्थे प्रयोजकत्वे प्रयोजके चान्य यासातिप्रसङ्ग। अन्यथा परम्परया कृतावपि कश्चित्प्रयोग कश्चिन्नेत्यत्र तत्र व्यवस्थेरित्यत स्वमतमाह—यत्नमात्रमिति।

ननु पचधातो पाकत्वे लक्षणायामपि पचतीतिव्यवहार प्रमाण स्यात् पाक त्वविशिष्टविषयकयत्नस्य पाकत्वविषयकत्वनियमात्, विशेष्यतैव संसर्ग इति चेत् थाऽपि वृष्ट्याद्यर्थं यतमानस्य वृष्टिविशेष्यकक्रत्युत्पादेऽपि स्वरूपायोग्यतया ततो वृष्ट्यनुत्पादे वर्षतीति, निगडनिश्चलदेहे च उत्थानानुत्पत्तावपि तद्विषयककृति मात्रायोत्तिष्ठतीति व्यवहारः स्यात स्वाख्यान्यविशेष्यककृत्या शर्करामोजने ना भुङ्क्ते इत्यत आह—जनकत्वमिति। जनकत्वं च प्रागुक्तयुक्त्या प्रयोजक त्वाविशेषेऽत्र बोध्यम्। वृष्ट्यादिप्रयोजकत्व नारम्भादिकृतेरिति नातिप्रसङ्गः। विशेष्यितायाश्च विशेष्यतावच्छेदकैक्येनैक्यात् विशेष्यितासमर्गत्वनापि तत्पक्षे अतिप्रसङ्गभङ्ग इति भावः ॥ ४ ॥

(मधु०) वैयाकरणमतमुत्थापयति—कर्त्तृ-कर्मणी इति। लकार आख्यातम् इति सामानाधिकरण्यानुरोधादिति, इति अत्र, चैत्र-तण्डुलादिपदाख्यातपदयोरेक धर्मिबोधकत्वानुरोधादित्यर्थं, विभिन्नप्रवृत्तिनिमित्तकयोरेकधर्मिबोधकत्व लक्षणस्य शाब्दसामानाधिकरण्यस्यात्र सामानाधिकरण्यपदार्थत्वात्।

ननु चैत्र-तण्डुलाख्यातपदयोरेकधर्मिबोधकत्वमत्रासिद्ध तथाच लाघवात् प्रकृतिनिरूपितमाख्यातस्य अन्वयितावच्छेदकमित्यत आह—अन्यथेति। तयोरेकध र्म्यबोधकत्वं इत्यर्थं।

केचित्तु इति सामानाधिकरण्यानुरोधादित्यत्र चैत्र—तण्डुलपदार्थाख्यातार्थयोरभेदसंसर्गकबोधानुरोधात्। तदिदमेवात्रासिद्ध तथाच लाघवात् प्रकृतित्वमेवाख्यातस्य अन्वयितावच्छेदकमित्यस्वरसात्मावकान्तरमाह—अन्यथेति। कर्त्तृ-कर्मणोरनभिधाने इत्यादि।

कृत्यभिधानस्याविशिष्टत्वात् । कर्तृ–कर्मसङ्ख्याभिधानानभिधानाभ्यां नियमः—न चैवं चैत्रेण दृष्टो घट इत्यादौ विनापि तिङं सङ्ख्याप्रतीतेः क्लृप्तशक्तेः सुप एव सङ्ख्योपस्थितिसंभवे तिङो न तदभिधायकत्वमिति वाच्यम् । चैत्रो मैत्रश्च गच्छत इत्यादौ विनापि तादृशसुपं द्वित्वादिप्रत्ययात् लाघवादेकवचनत्वादिनैव एकत्वादौ शक्तत्वाच्च–इत्यपि नास्ति, क्लृप्ता सङ्ख्यानभिधानात् । किंच एकत्वादिसंख्याभिधाने न नियमः पदार्थतावच्छेदकावच्छिन्नस्याकाङ्क्षादिवशात् कर्तृकर्मसाधारण्येनान्वयबोधस्य दुर्वारत्वात् । कर्त्रेकत्वत्वादिनाभिधानेऽपि कर्त्रादेरप्यभिधेयत्वं, शक्तौ शक्ततावच्छेदकशक्यतावच्छेदकयोश्च गौरवमधिकम् । तस्मादाख्यातत्वेन कर्तरि, आत्मनेपदत्वेन च कर्मणि एकवचनत्वादिना तद्रूपेण वा एकत्वादौ शक्तिः; एकपदोपात्तत्वाच्च संख्याया वाच्यगामित्वम् । कर्तृ–कर्मबोधकत्वं च एकदाऽव्युत्पन्नम्, अतएव मैत्रः पच्यते तण्डुल इत्यादयो न प्रयोगाः । कर्तरि यकोऽसाधुत्वाच्च पच्यते चैत्र इत्यादयोऽपि कर्तरि नेति वैयाकरणाः ॥ ५ ॥

तयोः तृतीया–द्वितीययो । अनभिहिताधिकारीयत्वादिति कर्तृ–कर्मणोरनभिधाने विधानुशिष्टत्वादित्यर्थः । ननु द्वितीयातृतीययोरनभिहिताख्यातेन कृत्यनभिधाने कर्मणि द्वितीयेत्येतदर्थं–इत्यत आह–कृत्यभिधानस्येति । अविशिष्टत्वादिति भवन्मते कर्तृकर्माख्यातसाधारणत्वादित्यर्थः । तथाच तण्डुलं पचतीत्यत्रापि द्वितीया चैत्रेण पच्यते इत्यत्रापि तृतीया न स्यादित्यर्थः । एतच्च कर्माख्यातस्यापि कृतिबोधकत्वमिति प्राचीनमतानुसारेण, तन्मते अन्वयबोधप्रकारश्चाग्रे व्युत्पादनीयः ।

वस्तुतस्तु कृत्यनभिधानाभिधानस्य तृतीया–द्वितीयानियामकत्वे चैत्रो घटं जानातीत्यादावपि कर्तरि तृतीयापत्तेः, कर्मणि द्वितीयापत्ते । न चाख्यातेन मुख्य–भाक्तसाधारणकर्मत्वाभिधानानभिधानाभ्यामेव तृतीया–द्वितीयानियम

प्रसिद्ध्या तत्र प्रथमाविभक्ते संख्यायां लक्षणाया वक्तुमशक्यत्वात् शक्यसंबन्ध-स्यैव लक्षणात्वादिति । तत्र प्रथमाविभक्ते संख्यायां लक्षणाया वक्तुमशक्य-त्वेऽपि शक्तिभ्रमस्य सुवचतया विनिगमनाविरहस्य दुर्वारत्वादिति ।

नन्वेतावता आख्यातद्विवचनादेर्द्वित्वादौ शक्तिरायातु तदेकवचनस्य एकत्वे शक्तौ तु किं मानं, तथा च तत्रैव तृतीया-द्वितीयानियमार्थं कर्त्रादिराख्यातपदवाच्यः स्यादित्यत आह-लाघवादिति । सिप्त्यादिना एकत्वादिषु शक्तिकल्पने शक्यताव-च्छेदकगौरवापत्त्या लाघवादेकवचनत्वादिनैव प्रथमैकवचनादेरेकत्वादिषु शक्तिः, तथा चाख्यातैकवचनादेरप्येकत्वादिषु शक्तिरित्यर्थः । अत एव 'द्व्येकयो-र्द्विवचनैकवचने' इत्यनुशासनम् । यद्यप्येकवचनस्य नैकत्वशक्तत्वमावश्यकम्, नाप्येकत्वबोधकत्वं परमात्मस्यैव लक्षणादिना एकत्वबोधनात्, तथापि सङ्केत-विशेषसंबन्धेनैकवचनस्यैकत्वमेकवचनत्वादि, 'तान्येकवचन-द्विवचन-बहुवच-नान्येकशः' इत्यनुशासनेन तिङ्सुपोरेकवचनादिपदस्य सङ्केतितत्वात् । न चैवं तेन रूपेण ज्ञानं विना सिप्त्यादिना ज्ञानादेकत्वादिविषयो न स्यादिति वाच्यम् । तं विना शक्तिभ्रमनिष्ठत्वादिति भावः ।

अत्र नव्याः-सिप्त्यादिना प्रातिस्विकरूपेण शक्तिभ्रमैरेकत्वादिषु यद्यपि तिप्त्वादिना तिङ्विभक्तेरेकत्वादिषु शक्तिरावश्यकी चैत्रः पचतीत्यादावगृहीतसं-ख्याशक्तिकानां पदार्थोपस्थित्यादेरेकत्वादिनिष्ठप्रतियोगिज्ञानादेकत्वादिबोधो भवत्य-विवादम् । तथा च तिबादेः प्रकृतित्व शक्यतावच्छेदकमेकत्वत्वादिकं चेत्यत्र विनिगमकाभावादुभयोरेव तच्छक्यतावच्छेदकत्वसिद्धेः । एकत्वादेः शक्यताव-च्छेदकत्वेऽपि प्रकृतित्वप्रकारेण बोधस्य लक्षणादिना सम्भवत्वात्, प्रकृतित्वप्रका-रकतिबादिजन्यबोधस्येव एकत्वादिप्रकारकतज्जन्यबोधस्यापि स्वारसिकत्वस्य प्रामाणिकसिद्धत्वात् । अन्यथा बोधस्य स्वारसिकत्वमादाय विवादे पचादिपद-स्यापि प्रत्येकमादाय विनिगमनाविरहेण लाघवात् हरिणत्वादेरशक्यतावच्छेद-कतापत्तेः नानार्थोच्छेदापत्तेश्च । एवं च प्रथमैकवचन-द्विवचन-बहुवचनानां वा एकत्व-द्वित्व-बहुत्वेषु शक्तिः, तिङेकवचन-द्विवचन-बहुवचनानां वा इत्यत्र विनिगमकाभावादेकत्वादिषु शक्तिसिद्धिः, चैत्र पचतीत्यादौ अगृहीतसंख्याश-क्तिकानां पदार्थोपस्थित्यादेरेकत्वादिनिष्ठप्रतियोगिज्ञानादप्येकत्वादिबोधस्य सर्वसिद्ध-त्वात् । न च तद्वृत्तिज्ञानं लक्षणाज्ञानरूपं शक्तिभ्रमरूपं वेति वाच्यम् । तद्वृत्ति-ज्ञानं लक्षणाज्ञानादिरूपं प्रथमैकवचनस्यैकत्वादिषु शक्तिज्ञानं वा शक्तिभ्रम-रूपमित्यत्र विनिगमकाभावात् प्रत्येकमादाय विनिगमकाभावेन तिङेकवचनादे-रप्येकत्वादिशक्तिरस्त्येवेत्याहुः ।

केचित्तु चैत्रस्त्वं पचति-पचत इत्यादितः तिङः कर्तरि लक्षणादिना वा वैयाकरणमते तिङः शक्त्या वा एव पाककर्तृत्वादिबोधस्य सर्वसिद्धत्वादाख्या-

कर्मद्वये शक्ति, आत्मनेपदबहुवचनस्य कर्मबहुत्वेन कर्मबहुषु शक्ति । तथाच कर्तृकर्मशक्तिवादिना वैयाकरणाना कर्तृ-कर्मणोरभेदसंसर्गेणान्वयनियामकस्येव अस्माकमपि कर्तृकर्मादीना तादात्म्यसम्बन्धेनान्वये नियामकत्वादतिप्रसङ्गस्य दवस्य इत्यत आह-कर्तृकर्मत्वादिनेति । कर्तृकर्मत्वादिनेति पाठस्तु प्रामादिक । अभिधानेऽपि, आख्यातस्य शक्तावपि । अभिधेयस्य शक्तिविशेष्यत्वम् । नन्वत्र दुष्प्रापत्ति किंतु कैवल्यकर्तृत्वादेः शक्यतावच्छेदकस्य एव विवाद इत्यत आह-वाचकाविति । व्याख्यान च पूर्वोक्तमिति भाव ।

वैयाकरण स्वमतनिष्कर्षमाह-तस्मादिति । आख्यातस्येनेति पचते इत्यादावात्मनेपदेनापि कर्तृबोधनादिति भाव । आत्मनेपदत्वेनेति, परस्मैपदत्वेन कर्तारिरपि कर्माबोधनादिति भाव । एकवचनत्वादिनेति । आदिना द्विवचनत्व-बहुवचनत्वपरिग्रह । एकवचनत्वादिरूपेणाख्यातस्य तिवादिप्रकारक ज्ञानादिना शक्तिभ्रमेकत्वादिबोधो यद्यप्यसिद्धस्तदा स्यात्-तत्तद्रूपेणवेति । एवमाख्यातत्वादि शक्यतावच्छेदकत्वाभिधानमप्यापाततः वस्तुतस्तु प्रागुक्तयुक्त्या तिवादित्वमेव बोध्यम् । ननु भवतामपि सङ्ख्यान्वयनियम कथमित्यत आह-एकेति । यस्मात्, एकनैवाख्यातपदेनोपस्थापितत्वात् इत्यर्थ । साम्यमानसित्वमिति सङ्ख्या-आख्यातार्थनिरूपितशक्यतयोपस्थितत्वमित्यर्थं । तथाच विशेष्यतावच्छेदकतासम्बन्धेन आख्यातजन्यप्रकारकशाब्दबोधोत्पत्ति प्रति पार्थलैकस्वत्वाप्युपस्थितिप्रकारतासम्बन्धेनाख्यातजन्योपस्थितेः कारणतया नान्यत्र तदन्वय । चैत्र पचतीत्यादौ चैत्रे एव एकत्वप्रभिन्न-इत्यादेरेवान्वयबोध । अत एव एकवचन-तिङ्वचनयोरुभयोरेव साधुत्वमिति भाव ।

केचित्तु कर्तृत्वावच्छिन्नविशेष्यतासम्बन्धेनाख्यातपदजन्यसङ्ख्याप्रकारकशाब्दबोधोत्पत्ति प्रति आख्यातपदजन्यकर्तृत्वप्रकारकोपस्थिति कर्मत्वावच्छिन्नविशेष्यतासम्बन्धेनाख्यातपदजन्यसङ्ख्याप्रकारकशाब्दबोधोत्पत्ति प्रति आख्यातपदजन्यकर्मत्वोपस्थितिर्विशेष्यतासम्बन्धेन कारण, तदुभयातिरिक्तविशेष्यतासम्बन्धे आख्यातजन्यसङ्ख्याप्रकारकशाब्दबोधोत्पत्तौ एकतया यावद्विशेषकारणबाधादेव सङ्ख्याया धात्वादौ न सङ्ख्याया अन्वय-इत्याहु ।

ननु पच्यत इति प्रयोगस्य कर्तृ-कर्मोभयसाधारणतया चैत्र पच्यते तण्डुल इत्यादौ चैत्र पाककर्ता तण्डुल पाककर्मेति बोधो आवश्यकतामात्मनेपदस्य कर्तृ-कर्मोभयवाचकत्वादित्यत आह-कर्तृकर्मेति । बोधकत्व स्मारकत्वम् । अयमाशयः, एकाख्यातपदविषयकज्ञानस्यापीदम् । पदज्ञानस्य उद्बोधकविधयेव पदार्थस्मारकतया पदत्वेन तत्तज्ज्ञानव्यक्तिभिन्नाख्यातपदज्ञानस्यैव कर्तृ-कर्मोद्बोधकत्वात्, अन्यथा न्यायनयेऽपि तत्र कर्तृत्व-कर्मत्वबोधस्य दुर्वारत्वादिति भाव । चैत्र पच्यते तण्डुल इत्यत्रापि पच्यतेपदस्यावृत्त्या कर्तृ—

कर्मसंस्मरणादुत्पत्तेरिति । चैत्र पच्यते तण्डुल मैत्रेण पच्यते तण्डुल इत्यत्र समूहालम्बनाख्यातपदद्वयज्ञानस्यैवैव कर्मकर्तृव्यापारकत्वादिकेत्याख्यातपदविशेषण, मैत्रेण पच्यते ओदन चैत्रस्तेमनं इत्यादिष्वप्यास्पष्टत्वेन कर्तृ-कर्मबोध । यद्वा बोधकत्वमनुभावकत्वमप्युत्पन्नमेकाख्यातपदविषयकैकज्ञानजन्यकर्तृकर्मोपस्थिते रसिद्ध, पदज्ञानजन्यकर्तृ-कर्मोपस्थिते शाब्दबुद्धिकारणतया तत्तदुपस्थितिव्यक्तिभिन्नत्वविशिष्टजन्यत्वस्य प्रसक्तत्वादिति भाव । न प्रयोगा इति । न विना आवृत्तिं, चैत्र पाककर्ता तण्डुल पाककर्मेति बोधजनका इत्यर्थः । एतद्यथा ततः, सति तात्पर्यज्ञाने आवृत्तिं विनापि तादृशबोधस्येष्टत्वादिति ध्येयम् । ननु तथापि चैत्र पच्यते इत्यत्र चैत्र पाककर्तेति बोधो दुर्वार आत्मनेपदस्य कर्तर्यपि साधुत्वादित्यत आह—कर्तरीति । असाधुत्वात्, अप्रामाणिकत्वात् । यथा प्रसमभिव्याहृतानुपूर्व्या एव तथाविधत्वादन्यथा ध्यायनयेऽपि तत्र कर्तृत्वबोधस्य दुर्वारत्वादिति भाव । चस्त्वर्थ, इत्यादयोऽपि न प्रयोगा, इति लभ्यते, न कर्तृबोधका इति तदर्थ । इदमुपलक्षण, कर्मणि अपोऽसाधुत्वात् तण्डुल पचते इत्यादयोऽपि न कर्मबोधका इत्यपि मन्तव्यम् ॥ १ ॥

( राम० ) वैयाकरणमतमाह—कर्तृकर्मणी इति । लकार. आख्यात, वैयाकरणैस्त्यादीनां लत्वेन परिभाषितत्वादित्यर्थ । कर्तृत्व कर्मत्व च समवायेन विषयतया वा कृतिरेव शक्यतावच्छेदिकेति, पचतीत्यादौ समवायेन कृतिप्रकारेण, पच्यते इत्यादौ च विषयतया कृतिप्रकारेण तत्तदर्थबोधस्याऽनुभविकत्वादित्यर्थ । इति, इत्यत्र सामानाधिकरण्येति चैत्रपदाख्यातपदयोर्भिन्नरूपाभ्या चैत्रत्व-कृतिभ्यामेकस्य चैत्रस्य धर्मिणो बोधकत्वमेव शाब्दसामानाधिकरण्य, चैत्रेण पच्यते तण्डुल इत्यादौ च तण्डुलपदाख्यातपदयोर्भिन्नरूपाभ्या तण्डुलत्व-विषयतासम्बन्धेन कृतिभ्यामेकस्य तण्डुलधर्मिणो बोधकत्व शाब्दसामानाधिकरण्यमनुभवसिद्ध तदनुरोधादाख्यातसामान्यस्य समवायेन कृति शक्यतावच्छेदिका आत्मनेपदस्य च विषयतासम्बन्धेन कृति शक्यतावच्छेदिकेति समुदायार्थ । यद्वा सामानाधिकरण्यानुरोधादित्यस्य चैत्रादिपदार्थे तादात्म्यसम्बन्धेनाख्यातार्थप्रकारकबोधस्यानुरोधादित्यर्थ । अन्ययेति आख्यातस्य कर्तरि कर्मणि च शक्त्यनङ्गीकारे इत्यर्थ । तयो तृतीया-द्वितीययो अनभिहिताधिकारीयसूत्राभ्या साधुत्वेन प्रतिपादनादित्यर्थ । आख्यातेन कर्तुरनभिधाने समभिव्याहृतप्रातिपदिके तृतीया, एव आख्यातेन कर्मणोऽनभिधाने समभिव्याहृतप्रातिपदिके द्वितीया इति तृतीया-द्वितीयाविधायकसूत्रस्यार्थस्तथा च कृति कर्मत्व वा यद्याख्यातशक्य न तु कर्ता कर्म वा तदा तृतीया-द्वितीयाविधायकसूत्रबलेन चैत्र पचतीत्यादौ तृतीया चैत्रेण पच्यते तण्डुल इत्यादौ द्वितीया स्यादेव च चैत्रेण तण्डुल पचति चैत्रेण पच्यते तण्डुलमित्यादिप्रयोगस्यापि साधुत्वापत्तिर्नचेष्टापत्तिस्तथा सति यथादौ तादृशप्रयोगेऽप्यसाधुशब्दप्रयोगकृतदोषविरहप्रसङ्गादित्यर्थ । अत

हेतुमाह—कृत्यभिधानेति । कृत्यभिधानेत्यनन्तरं मात्रपदाध्याहारेण कर्त्राख्यातस्थले कर्माख्यातस्थले च कर्तुः कर्मणश्चानभिधानेऽप्य भवन्मते तुल्यत्वादित्यर्थः करणीयः । यद्वा ननु कृतेरनभिधाने तृतीया कृतेरभिधाने द्वितीयेत्यनभिहिताधिकारीयसूत्रार्थो वाच्यः इति नोक्तदोष इत्यत आह—कृत्यभिधानस्येति । अविशिष्टत्वादिति चैत्रः पचतीत्यादाविव चैत्रेण पच्यते इत्यत्रापि कृत्यभिधानस्याविशिष्टत्वादित्यर्थः । तथाच चैत्रेण पच्यते इत्यत्रापि तृतीया न स्यादित्यर्थः । ननु कर्तृगतसङ्ख्यायाः प्रत्ययेनानभिधाने तृतीया एवं कर्मगतसंख्यायाः प्रत्ययेनानभिधाने द्वितीयेत्यनभिहिताधिकारीयसूत्रार्थोऽस्त्वित्यत इति नोक्तातिप्रसङ्ग इत्याशङ्क्य निराकुरुते—कर्तृ-कर्मेत्यादि । अत्र च कर्तृकर्मेत्यादेः इत्यपि निरन्तरस्यन्त एको ग्रन्थः । नन्वाख्यातस्य सङ्ख्यावाचकत्वे लक्षणानियमः संभवति तत्र च प्रमाणं नास्तीत्याशङ्क्य निराकुरुते—न चेति । यद्यपि चैत्रेण पच इत्यस्योपदर्शनं निरर्थकं पच इत्येन लुपः श्रुतसंख्यावाचकत्वात् तथापि कृत्स्नमभिव्याहारस्थले लुपः सङ्ख्याबोधकत्वे प्रदर्शिते कृतः संख्यावाचकत्वे मानाभाव इत्युक्तं भवति । तथाच कृतः संख्यानभिधानादिति वक्ष्यमाणदूषणस्य स्फुटता भवतीत्यभिप्रायेण तदुपदर्शनमिति ध्येयम् । संख्याप्रतीतेरिति । एकोऽयमेकप्रतिदर्शनमिव इत्यन्वयबोधे एकत्वसंख्यादिप्रतीतेरित्यर्थः । इदं च लुप्तशक्तेरिव शक्तिकल्पने हेतुः । लुप पचेति । प्रथमाविभक्तेरेवेत्यर्थः । सङ्ख्योपस्थितिसंभवे इति, चैत्रो गच्छति यमो गच्छत इत्यादौ एकत्वादिप्रतीतिसंभवं इत्यर्थः, न संख्याभिधायकत्वमाख्यातस्य न संख्याबोधकत्वम् । चैत्रो मैत्रश्चेति । इत्याद्यभिप्रायकेन चैत्रो मैत्रो देवदत्तश्च गच्छन्तीत्यादिसंग्रहः साधकमिति, द्वित्वादिबोधकत्वमित्यर्थः । तथाच अत्र द्वित्वादिसंख्यावाचकपदयोऽभावादकर्मेनाख्यातस्य संख्यावाचकत्वमङ्गीकार्यमिति भावः । न चोक्तप्रयोगे लक्षणयैव एकवचनात् द्वित्वादिसंख्याबोधसंभवे किमनुरोधेनाख्यातस्य संख्यावाचकत्वमङ्गीकार्यमिति वाच्यम्, लक्षणाबीजानामनिर्धारणायामपि इतरान्वयात् द्वित्वादिसङ्ख्यान्वयबोधस्य सर्वानुभवसिद्धत्वात् । अन्यथा अन्यत्रापि शक्त्युच्छेदप्रसङ्गात् । ननु उक्तवाक्यप्रामाण्यानुरोधादाख्यातद्विवचनादेर्द्वित्वादिसंख्यावाचकत्वस्य सिद्धत्वेऽपि आख्यातैकवचनस्य संख्यावाचकत्वं न सिद्ध्यतीत्यत आह—लाघवादिति । द्वित्वाद्यनन्तधर्मेषु शक्ततावच्छेदकत्वकल्पनापेक्षया आख्यातैकवचनत्वेनैकवचनस्य शक्ततावच्छेदकत्वे लाघवादित्यर्थः, एकवचनत्वं च लक्षणाबहुवचनेतरत्वे संख्याबोधजनकतावच्छेदकानुपूर्वीमत्त्वमिति नान्योन्याश्रयादिकमिति । नव्यास्तु चैत्रो गच्छतीत्यादौ एकवचनस्य शक्तिप्रतिसंधानं विनापि संख्यान्वयबोधस्य सर्वजनानुभवसिद्धत्वेन एकवचनस्यैव आख्यातैकवचनस्यापि संख्यावाचकत्वं निर्विवादमिति वदन्ति । कृतेति । तथाच कर्मत्वविशिष्टान्यपदघटितवाक्ये कर्मपदस्य द्वितीयान्तता कर्तृ-

वाचिकृत्प्रत्ययघटितवाक्ये कर्तृपदस्य तृतीयान्तता स्यादिति भावः । ननु आख्यातघटितवाक्य एव तादृशनियमः कृत्प्रत्ययघटितवाक्यस्थले तु नियमान्तरमेवेत्यत आह–क्वचिच्चेति । एकत्वादिसंख्याभिधान इति, आख्यातजन्य एकत्वादिसंख्याप्रकारकान्वयबोध इत्यर्थः न नियमः, कृतिशक्तिवादिना मते न विशेष्यत्वनियमः, तथाच क्वचित्कर्तुः क्वचित्कर्मणश्च तद्विशेष्यत्वे विनिगमकस्य वक्तुमशक्यत्वादिति भावः । एतदेव स्पष्टयति–पदार्थतावच्छेदकावच्छिन्नस्येति । आख्यातोपस्थापितस्यैकत्वस्यानवच्छिन्नस्येत्यर्थः । आकाङ्क्षादिवशात्, आकाङ्क्षादिसाचिव्यात् । कर्तृ–कर्मेति, तथाचोभयत्रैव संख्यान्वयात् चैत्र तण्डुलः पचति इत्यत्र कर्मपदं प्रथमान्तं स्यात् स्याच्च चैत्रेण पच्यते तण्डुल इत्यत्र कर्तृपदं प्रथमान्तमिति भावः । कर्मैकत्वरथादिनेति । यद्यपि देवदत्तोऽप्याख्यानार्थसंख्यान्वयापत्त्या चैत्रेण देवदत्तोऽयं गच्छतीत्यादिप्रयोगापत्तिश्च, तथापि स्वप्रकृत्यर्थक्रियाकर्तृत्वत्वादिना शक्तिकल्पने तात्पर्यम् । मन्वेवं स्वत्वानुगमस्यापि सत्त्वेन तदनभिधाने न्यूनता, प्राचां मते यत्र–सत्त्वादिवत् स्वत्वस्याप्यनुगतत्वेन तन्मतमाश्रित्यैतदभिधानात् । कर्मादेरपीति । आदिपदेन कर्मपरिग्रहः निरुक्तस्य वाक्यत्वे विशेषणांशेऽपि शक्तिरावश्यकीति भावः । अभिधेयत्वं शक्यत्वं, तथाच व्याघ्रभिया पलायमानस्यत्यादिप्रयोगावतार इति भावः । इदञ्चापलक्षणम् यमश्वस्तमश्व गच्छतीत्यादावुभयकर्मजन्ययोगस्थले स्वप्रकृत्यर्थक्रियाकर्तृत्वस्य कर्तृ–कर्मसाधारणतयाख्यातस्य निरुक्ताश्च स्वप्रकृत्यर्थत्वांशे च शक्तिसम्बन्धकल्पने गौरवम् । तत्र कर्मैकवचनाख्यातस्यापि शक्ततावच्छेदकमिति शक्ततावच्छेदकगौरवम् । एवं शक्यतावच्छेदकगौरवं च स्फुटमेव, कर्मत्वस्वप्रदे शक्यतावच्छेदकत्वादिति । तथाच कर्मत्वत्वादिना शक्तिकल्पने कर्तरि कर्मणि च विशेषणतया शक्तिः स्वीकृतैव भवता, अपि च तत्र अकल्पादिगौरवमिति सम्प्रदायार्थः ।

वैयाकरण एवमतद्वप्रसरति—तस्मादिति । एकवचनत्वस्याखण्डस्यैकत्वाभ्युपगमे स्वाह–तत्तद्रूपेणेति । मित्त्वादिनैव तित्वादिना वस्त्वर्थः । आख्यातस्य दशलकारसाधारण्येऽपि तत्तदन्यतमत्वेन प्रागुक्तं तत्रैवानुभवप्रम् । नन्वेवं कर्तृकर्मसाधारण्येन संख्यान्वयस्य दुर्वारत्वादिति दोषस्यापरिहार एवेत्यत आह—एकेति । एकेनाख्यातपदेन कर्तृ–संख्ययोरभिधानात् इति वर्तमानत्ववत् कर्तृसंख्ययोरेव परस्परमन्वय आमतत्त्वलभ्यत्वादिति सम्प्रदायः ।

नव्यास्तु कर्माख्यातजन्यसंख्याप्रकारकशाब्दत्वावच्छिन्नं प्रति आख्यातजन्यकर्तृत्वोपस्थितित्वेन हेतुत्वे लाघवात् । अन्यथा तादृशशाब्दत्वावच्छिन्नं प्रति चैत्रादिपदजन्योपस्थितीनामनन्तानां परामर्शानामिव कार्य–कारणभावकल्पने महागौरवप्रसङ्गादित्यत्र तात्पर्यमित्याहुः ।

नन्वाख्यातसामान्यस्य कर्तृशक्ततया आत्मनेपदस्यापि कर्तृबोधकत्वं कर्मबोधकत्वं च तस्य प्रसिद्धं तथा चैकदा कर्तृ-कर्मतात्पर्ये चैत्रः पच्यते तण्डुल इत्यादिप्रयोगापत्तिरित्यत आह—कर्तृकर्मेति । अव्युत्पन्नमिति, एकदा तदुभयबोधाय कार्य-कारणभावानवच्छिन्नत्वादिति भावः । न चैवमाख्यातस्यैकदा कर्तृ-कर्मबोधकत्वाभावे मैत्रेण तण्डुलः पच्यते चैत्रस्तु तेमनं इत्यादावेकस्मादाख्यातात् तण्डुले चैत्रकर्तृकपाककर्मत्वस्य मैत्रे तेमनकर्तृत्वस्य च समूहालम्बनशाब्दबोधो न स्यादिति वाच्यम् । आख्यातान्तराध्याहारस्य तत्र एकैकस्य समूहालम्बनशाब्दबोधाङ्गीकारात् । यत्र च नाध्याहारस्तत्रैकस्मादेवाख्यातादावृत्त्या क्रमेणैव कर्तृत्वस्य कर्मत्वस्य च शाब्दबोधो न समूहालम्बनम् । तथाऽऽवृत्तिस्वीकारे एकस्याख्यातस्य एकदा कर्तृकर्मबोधकत्वाभावव्युत्पत्तिभङ्ग एव, एतादृशव्युत्पत्तेरावृत्त्यनवच्छिन्नत्वैकस्याख्यातस्य निरूपितत्वादिति दिक् । ननु मास्तु उक्तव्युत्पत्तिविरोधेनैव दोषमयबोधकत्वं, तथापि चैत्रे पाककर्तृत्वमात्रतात्पर्यदशायां चैत्रः पच्यते इति प्रयोगः स्यादित्यत आह—कर्तरीति । असाधुत्वमेवेत्यत्र चोऽवधारणे ॥ ६ ॥

( रघु० ) वैयाकरणमतमाह—कर्तृकर्मणीति । लकारवाच्ये आख्यातार्थे इतीति इत्यनेनेत्यर्थः । सामानाधिकरण्यानुरोधादिति, नामाख्यातयोरेकधर्मिबोधकत्वरूपसामानाधिकरण्यस्योपपत्त्यानुभवसिद्धत्वादित्यर्थः । नन्वेवमाख्याते मानाभाव इत्यत आह—अन्यथेति । कर्त्राख्यातकर्माख्यातयोः कर्तृकर्मणोरनभिधायकत्वे इत्यर्थः । तयोरिति । द्वितीयातृतीययोरित्यर्थः । अनभिहिताधिकारीयत्वादिति । कर्तृकर्मानभिधायकाख्यातसमभिव्याहारे अभिहितत्वादित्यर्थः । यत्राख्यातेन कर्ता नाभिधीयते तत्र तृतीया, यत्र चाख्यातेन कर्म नाभिधीयते तत्र द्वितीयाभियुक्तस्मृतेति भावः । नन्वाख्यातस्य कृत्यभिधायकत्वानभिधायकत्वे एव द्वितीयातृतीययोर्नियामके स्तः । तथा च व्यर्थमाख्यातस्य कर्त्राद्यभिधायकत्वमित्यत आह—कृत्यभिधानस्येति । अविशिष्टत्वादिति, कर्माख्यातसाधारणत्वादित्यर्थः । तथा च नैयायिकनये कर्माख्यातस्यापि कृतिवाचकतया तत्र तृतीया न स्यादिति भावः । न च नैयायिकनये कर्माख्यातस्य कर्मत्वार्थकतया कथमेतदिति वाच्यम् । प्राचीननैयायिकनय एवैतदभिधानात् । स्फुटीभविष्यति चेदमुपरिष्टात् ।

शङ्कते—कर्तृकर्मेत्यादि । नियम द्वितीयातृतीययोस्तदभावयोश्च नियम इत्यर्थः । यत्र धातूत्तरप्रत्ययेन कर्तृगतसंख्याभिधीयते तत्र कर्तरि न तृतीया । यत्र कर्तृगतसंख्या नाभिधीयते तत्र कर्तरि तृतीया । एवं यत्र धातूत्तरप्रत्ययेन कर्मगता संख्याभिधीयते तत्र कर्मणि न द्वितीया । तेन यत्र कर्मगतसंख्या नाभिधीयते तत्र कर्मणि द्वितीयेति भावः । चैत्रेण दृष्टो घट इत्यादाविति ।

न च सुप संख्याभिधायकत्वे चैत्रो रूपवानित्युदाहरणं त्यक्त्वा चैत्रेण दृष्टो घट इत्येतावद्दूरपर्यन्तानुधावनमफलमिति वाच्यम् । नहि क्रियारहित वाक्यमस्तीति न्यायेन चैत्रो रूपवानित्यादौ गच्छतीतिक्रियामध्याहृत्य तिङैव सर्वत्र संख्याबोधसम्भवेऽल सुप सख्याभिधायकत्वेनेति शङ्कानिराकरणासम्भवे न सुप. सख्याभिधायकत्वे सक्रियतया तथाविधवाक्यपर्यन्तानुधावनस्यावैफ ल्यादिति । सुपशब्दे सुप एवेति, अवश्य सख्याकृतशक्ते. सुप्पदादित्यर्थं । न तदभिधायकत्वमिति । न सख्याभिधायकत्वमित्यर्थ । तथा च देवदत्तो गच्छतीत्यादावपि तिङ सख्यानभिधायकत्वेन तृतीया स्यादिति भाव । तादृश सुपमिति द्वित्वादिसख्याबोधक सुप्पदमित्यर्थ । द्वित्वादिप्रत्ययादिति । तथा च तत्र द्वित्वादिबोधान्यथानुपपत्त्या तिङोऽपि सख्यावाचकत्वमित्यर्थः ।

यत्तु चैत्रो मैत्रश्च गच्छत इत्यादौ मैत्रपदोत्तरसुबिभक्तेर्द्वित्वादिलाक्षणि कतया द्वित्वादिबोधसम्भवे तिङ सख्याभिधायकत्व निर्युक्तिकमिति तदश्रद्धे यम् । विनिगमनाविरहेण चैत्रपदोत्तरसुब्विभक्तेरपि द्वित्वादिबोधस्यावश्यकत्वे चैत्रद्वय मैत्रद्वय गच्छत इत्यापत्तिर्दुर्वारा स्यात् । तत्रैकवचनोपस्थितैकत्वान्वित- त्वेनादौ कथ तिङुपस्थाप्यद्वित्वादेरन्वय इति तु नाशङ्कनीयम्, तत्रैकत्वस्यावि- वक्षितत्वादिति । ननु तथाप्युपदर्शितयुक्त्या तिङो द्वित्वाभिधायकमस्तु एकत्वा भिधायकत्व तु तस्य निर्युक्तिकमित्याशङ्कामपाकर्तुमाह—लाघवादेकवचनत्वा- दिनैवेति । तथा चैकवचनत्वविशिष्टसुप्त्वस्यैकत्वशक्ततावच्छेदकत्वकल्पने गौ रवात्तदपहाय एकवचनत्व एव एकत्वशक्ततावच्छेदकत्वकल्पनमुचितमिति । एक वचनत्व चाभियुक्तैरेकवचनत्वेन परिभाषितत्व, तच्च तिबादिसाधारणमिति तिबादेरप्येकत्वबोधकत्वमक्षुण्णमिति भाव ।

केचित्तु पचतीत्यादावाख्यातपदाङ्गपरतया शक्त्या वा कर्तृबोधेऽपि तत्र नियमत एकत्वबोधस्यानुभवसिद्धत्वात्तिप एकत्वबोधकत्वमावश्यकम् । न च तत्राख्यातस्यैकत्वविशिष्टकर्तरि लक्षणेति वाच्यम् । नियमत प्रतीयमानेऽप्यर्थे लक्षणाकल्पने यत्नेऽप्याख्यातस्य शक्तिकल्पनस्य निर्युक्तिकत्व, लक्षणयैव तत्र यत्नबोधसम्भवादित्याहु । कर्तृकर्मणसख्याभिधानानभिधानाभ्यामित्यारभ्य ना स्तीत्यन्तग्रन्थोपरि वैयाकरण समाधत्ते—क्लेत्यादि । तथा च सुब्वि भक्ति विना कृत्प्रत्ययावस्थानासम्भवात् कृत्प्रत्ययोत्तरसुप एव सख्याबोधसम्भवे तत्र सख्याबोधकत्व निर्युक्तिकम् । न च विनिगमनाविरह इति वाच्यम् । एकवचनत्वेन सुपस्तत्र शक्तेरन्यत्र क्लृप्तत्वात् । एव चैत्रो ग्राम गतवानित्यादौ

गभिधानृत्तरकृत्प्रत्ययस्य सङ्ख्यानभिधायकत्वेन तृतीयापत्तेर्दोषोऽप्यशक्यवारणत्वादिति भावः ।

ननु यत्र आख्यातेन कर्तृगतसङ्ख्याभिधीयते तत्र प्रथमा । यत्र तेन कर्तृगतसङ्ख्या नाभिधीयते तत्र तृतीयेति । एवं कर्मणि प्रथमादिनियमो वाच्यः । कृत्प्रत्ययस्थले च कर्त्रादेरभिधानानभिधानाभ्यां तथा नियमो वाच्यः । तत्र च न कोऽपि दोष इत्यत आह—किं चेति । न नियम इति । कर्त्राख्यातेन कर्तृगतसङ्ख्यैवाभिधीयते न तु कर्मगतसंख्या । एवं कर्माख्यातेन कर्मगतसङ्ख्यैवाभिधीयते न तु कर्तृगतसङ्ख्येति नियमालाभ इत्यर्थः । ननु तादृशनियमालाभे का क्षतिरित्यत आह—पदार्थतावच्छेदकावच्छिन्नत्वेति । एकत्वत्वावच्छिन्नस्येत्यर्थः । आकाङ्क्षादिवशादिति । एकवचनत्वावच्छिन्नशक्तिवशादित्यर्थः । तथा च चैत्रो ग्रामं गच्छतीत्यत्राख्यातेन कर्मगतसङ्ख्याबोधने बाधकाभावेन तत्रापि कर्मणि प्रथमा स्यात् । एवं चैत्रेणौदनः पच्यत इत्याख्यातेन कर्तृगतसङ्ख्याबोधने बाधकाभावेन तत्रापि कर्तरि प्रथमापत्तिरिति भावः ।

ननु कर्त्रेकवचनत्वावच्छिन्नस्य कर्त्रेकत्वं शक्यतावच्छेदकमेवं कर्मैकवचनत्वावच्छिन्नस्य कर्मैकत्वं शक्यतावच्छेदकमिति वाच्यम् । तथा च शक्यतावच्छेदकशक्ततावच्छेदकभेदान्न सर्वत्र कर्तृकर्मसाधारणैकत्वबोध इत्यत आह—कर्त्रेकत्वत्वादिनाभिधाने त्विति । कर्त्रेकत्वत्वादिना कर्मैकत्वादौ कर्त्रेकवचनत्वावच्छिन्नादेः शक्तिकल्पने त्वित्यर्थः । आदिना कर्मैकत्वत्वादिपरिग्रहः । अभिधेयत्वं शक्यतावच्छेदककोटिप्रविष्टत्वम् । इदमुपलक्षणम् । कर्त्रादिपदस्यापि शक्यतावच्छेदककोटिप्रविष्टत्वमित्यपि बोध्यम् । नन्वेतेन किमायातमत आह—शक्ताविति । शक्तावित्यस्य गौरवमित्यत्रैवानेनान्वयः । तथा च कर्त्रादिघटितधर्मविशिष्टे शक्तिकल्पनेन तत्तद्घटितधर्मस्य शक्ततावच्छेदकत्वकल्पनेन, कर्त्रादिपदघटितधर्मस्य शक्यतावच्छेदकत्वकल्पनेन च महागौरवं नैयायिकमते । वैयाकरणमते एकत्वत्वादिना शक्यता, एकवचनत्वादिना शक्ततेति लाघवमतिस्फुटमिति भावः । वैयाकरणमतमुपसंहरति—तस्मादिति । तत्तद्रूपेण चेति विभक्त्यादिनेत्यर्थः ।

नन्वेवं सति वैयाकरणमते कथं न कर्त्राद्याख्यातस्थले कर्मादौ सङ्ख्यान्वय इत्यत आह—एकपदेति । कर्त्रादिसंख्ययोरेकपदोपस्थाप्यत्वादित्यर्थः । सान्यगामित्वमिति । कर्त्राख्यातस्थले संख्यायाः कर्त्रादिष्वन्वयनियम इत्यर्थः । तथा

---

१ एकवचनत्वावच्छिन्नशक्तिवशादिति पाठः ।

च एकपदोपस्थाप्यानामर्थानामसति बाधके एकेनापरान्वय इति नियमेनैकत्वादिनिष्ठप्रकारतानिरूपितकर्तृनिष्ठविशेष्यतासम्बन्धेन कर्त्राख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति कर्त्राख्यातपदज्ञानजन्यकर्तृपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वस्य, एवमेकत्वादिनिष्ठप्रकारतानिरूपितकर्मनिष्ठविशेष्यतासम्बन्धेन कर्माख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति कर्माख्यातपदजन्यकर्मोपस्थितेर्विशेष्यतासम्बन्धेन हेतुत्वस्य च कल्पनीयतया कर्त्राख्यातस्थले न कर्मादौ सङ्ख्यान्वय इति भाव ।

ननु कर्त्राख्यातत्वेन कर्मणि चात्मनेपदत्वेन शक्तिकल्पने चैत्र, पच्यते तण्डुल इत्यादि प्रयोगापत्ति । तत्राख्यातस्य आख्यातत्वेन कर्तरि शक्ततया कर्तुरुपस्थितिसम्भवेनात्मनेपदत्वेन च तस्य कर्मशक्ततया कर्मणोऽप्युपस्थितिसम्भवेन तयोस्तत्र चैत्रतण्डुलादावभेदसम्बन्धेनान्वयबोधे बाधकाभावादित्यत आह—कर्तृकर्मेत्यादि । एकदाऽयुक्तत्वमिति एकस्मिन्काले एकस्मादुक्तत्वमित्यर्थ । तथा च तदाख्यातपदज्ञानजन्यकर्तृत्वप्रकारककर्तृशाब्दबुद्धित्वावच्छिन्नं प्रति कर्मबोधगृहीततात्पर्यकतदाख्यातपदज्ञानत्वादिना, एवं तदाख्यातपदजन्यकर्मत्वप्रकारककर्मविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति कर्तृबोधगृहीततात्पर्यकतदाख्यातपदज्ञानत्वादिना च प्रतिबन्धकत्वस्य कल्पनीयतया नैकदा आख्यातपदात् कर्तृकर्मणोर्बोधापत्तिरिति भाव ।

केचित्तु तदाख्यातजन्यकर्तृत्वप्रकारककर्तृविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति कर्मत्वबोधकद्वितीयाविभक्तिसमभिव्याहृतधातुसमभिव्याहृततदाख्यातपदज्ञानजन्यकर्तृपस्थितेरेव, तदाख्यातपदजन्यकर्मत्वप्रकारककर्मशाब्दबुद्धित्वावच्छिन्नं प्रति च तृतीयान्तपदसमभिव्याहृतधातुपदसमभिव्याहृततदाख्यातपदज्ञानजन्यकर्मोपस्थितेश्च हेतुत्वस्य कल्पनीयतया नैकदा एकाख्यातपदात् कर्तृकर्मणोरन्वयबोध । चैत्र, चैत्रेण तण्डुल तण्डुलं पच्यते इत्यादि प्रयोगे चेष्टापत्तिस्तत्राप्यन्वयबोधे कस्याप्यविवादादित्याहु ।

ननूपदर्शितरीत्या चैत्र पच्यते तण्डुल इत्यादिप्रयोगवारणेऽपि चैत्र पच्यते तण्डुलमित्यादिप्रयोगापत्तिर्दुर्वारैव, तत्र कर्मताबोधे गृहीततात्पर्यक[illegible] नाभावात् कर्तृ[illegible] स्थितिसम्भवाच्च [illegible] कर्तृत्वप्रकारककर्तृशाब्दबोधकतावच्छेदककोटावाख्यातपदांशे [illegible] श्रुतत्वात् । तथा च यगाद्यसमभिव्याहृतत्वमपि निवेशनीयमिति नोपदर्शितप्रयोगापत्तिरिति भाव ॥ ५ ॥

( जय० ) वैयाकरणमतमुत्थापयति—कर्तृकर्मणी इति । लकार आख्यातम् । सामानाधिकरण्येति । आख्यातस्य कर्तृकर्मशक्यत्व एव नामाख्यातयोर्भिन्नप्रवृत्तिनिमित्तयोरेकधर्मिबोधकत्वरूपं सामानाधिकरण्यमुपपद्यत इति भावः । ननु कृत्यभिधानानभिधानाभ्यामेव कर्माभिधानानभिधानयोः कर्माभिधानानभिधानयोश्च नियमो भविष्यति तत्राह—कृत्यभिधानेति । कर्मप्रत्ययेनापि कृतेरभिधानमिति प्राचीनमतेनेद, स्वमते तत्र तृतीयाया एव कृत्यभिधायकत्व बोध्यम् ।

नैयायिकमत दूषयति—कर्तृकर्मसंख्येति, इत्यपि नास्तीत्यन्तेन । नियम इति । आख्यातेन कर्तृकर्मसंख्याया अभिधाने प्रथमाऽनभिधाने तृतीयाद्वितीये इति नियम इत्यर्थः । तथा चाभिहिते कर्मणीत्याद्यनुशासनेऽभिहितसंख्यान्यमित्वमेवाभिहितत्वमिति भावः । न तदभिप्रायकत्व, संख्याभिधायकत्वम् । तथा च मैत्रः पचतीत्यादौ तृतीया स्यादिति भावः । तादृशसुपं द्वित्वादिबोधकसुपम् । न चानेक(त्व)धर्मितावच्छेदककद्वित्वधी॰, कुतः [1] एकत्वस्याविवक्षितत्वात् । विवक्षितत्वेऽप्येकेन द्वयमितिरीत्या बोध इत्यन्ये । एकैकत्वमात्रावच्छेदेनैव न द्वित्वधीरिति ।

नन्वभास्तु सुपेकवचनस्य द्वित्वे लक्षणा, न च सुब्विभक्तौ लक्षणास्त्वे धृति, स्वाहेत्यादौ प्रथमादेश्चतुर्थ्यर्थे लक्षणया प्रयोगसंभवाद्व्यत्ययानुशासनं व्यर्थं स्यादिति न तत्र लक्षणेति वाच्यम् । तद्वैयर्थ्यापत्त्या संख्याभिन्न एव सुब्विभक्तेर्लक्षणानुपगमात् । एकस्मै धारा इत्यादिप्रयोगात् । वस्तुतो व्यत्ययानुशासनं न प्रथमादेश्चतुर्थ्यादिस्मारकत्वसम्बन्धबोधकं तदर्थशक्तिग्राहकं वा श्रूयमाणप्रथमादितो लक्षणया चतुर्थ्यादार्थबोधसम्भवे पदान्तरस्मृतेः शक्त्यन्तरस्य वा कल्पनाया अन्याय्यत्वात् । किं तु यस्या विभक्तेरर्थे या विभक्तिर्विधीयते तद्विभक्त्यर्थे तदन्यविभक्तेर्लक्षणयाऽसाधुत्वमित्येतत्परतया सार्थकम् । अत एव घट जानातीत्यादौ द्वितीयादेर्विषयित्वादौ लक्षणा निष्प्रत्यूहेति चेत्तथा सुब्विभक्ते. प्रकृत्यर्थमात्रगतसंख्याबोधकत्वनियमात् चैत्रौ मैत्रश्च गच्छत इत्यादितश्चैत्रद्वयमैत्रद्वयबोधापत्ते. । न च चैत्रमैत्रपदे चैत्रमैत्रान्यतरपरे सभेदे नान्यतरवैयर्थ्यमिति वाच्यम् । बोधवैलक्षण्यात् । वस्तुत एकस्मिन्नेकवचनमित्यादिसमाख्याद्यनुशासनात्तादेकत्वादौ शक्तिसिद्धेर्द्वयोरित्याद्यनुशासनं एकवचनादावसाधुत्वज्ञापकमिति नात्र लक्षणासंभव. । एतेन चैत्रमैत्रपदे शक्त्या चैत्रमैत्रयोर्लक्षणया मैत्रचैत्रयोर्बोधके इति न बोधवैलक्षण्यमिति दिक् ।

---

१ इद वाक्यचन्द्रिकायामस्तीति आदर्शपुस्तके टिप्पणी।

नन्वेवमपि द्वित्वादिषु आख्यातद्विवचनादेः शक्तिः कल्प्यतां नत्वेकवचना-ख्यातस्यैकत्वे इत्यत आह—लाघवादिति । सुत्वात्वादिना शक्तिकल्पने च नानाशक्तिः स्यात्सुपेकवचनत्वेन तत्त्वे तु गौरवादेकवचनत्वेनैव तत्त्वमित्याख्या-तैकवचनस्याप्येकत्वे शक्तिरागतेति भावः । नन्वत्र तिमेकवचनत्वं नैकत्वश-क्तत्वमात्माश्रयप्रसङ्गात् । न च सङ्केतविशेषसम्बन्धेन एकवचनपदवत्त्वं तत् । तद्रूपेणाज्ञानदशायां सुत्वादिना ज्ञानादेकत्वादिप्रत्ययः शक्ततावच्छेदकभ्रमादे-वेति वाच्यम् । एकवचनपदस्याननुगमात्स्वस्यानन्त्यप्रसङ्गात् । शक्ततावच्छेदक-भेदात् । किं चैकवचनत्वेनाज्ञानेऽपि सुत्वादिना ज्ञानाद्भवेदेकत्वादिधी. । सुत्वादिनाऽज्ञाने चैकवचनत्वादिना ज्ञानेऽपि नेति सुत्वादिकमेवान्वयव्यतिरेका-भ्यां शक्ततावच्छेदक (एक) वचनादिपरिभाषाविशेषविषयत्वादिज्ञानं च एकस्य शक्तत्वज्ञापकतयोपयुज्यते । तदवच्छेदेन व्याकरणादेकत्वादिव्युत्पत्तेः । अत एव स्वादेरेकवचनत्वेनाज्ञानदशायां क्वचिन्नैकत्वादिधीर्द्विवचनत्वादिना ज्ञाने च द्वित्वादिशक्तत्वभ्रमाद्द्वित्वादिधीः । व्याकरणस्य चैतदपि फलं यत्तत्संज्ञया बहुना निर्देशः । प्रत्येकं निर्देशे ग्रन्थगौरवापत्तेः ।

अत्र वदन्ति—सुत्वादिकमेव शक्ततावच्छेदकं तथाऽपि तिप्त्वादिकं तथा पचतीत्यत्र पाककर्ता एक इति बोधात् । न च कर्तरि लक्षणावश्यकत्वादेक-त्वविशिष्टकर्तर्येव साऽस्तु विशिष्टे लक्षणाप्रतिसंधानविरहेऽपि तथा बोधात्, वै-याकरणानां शक्तिभ्रमेण बोधाच्च । न चैकत्वांशेऽपि शक्तिभ्रमो बाधका-भावात् । न चैवं कर्तर्यपि शक्तिरस्तु तत्र कदाचित्कृतिमत्कारकेऽनोधस्याप्यनुभव-सिद्धत्वात्, कृतौ लाघवात् शक्तौ कर्तृ शक्तिभ्रमाल्लक्षणातश्च लाभसम्भवस्यैव बाधकत्वात् । न चैवं सुपि द्वितीयात्वादिशक्तेस्तिङि भ्रमादेकत्वादिबोधसम्भवान्न निपाते शक्तिः । घटपदे शक्तौ कलशपदे तदभावप्रसङ्गात्, स्वरसतस्तदर्थप्रतीतेस्तुल्यैव । किं च विनिगमनाविरहादेव निपाते शक्तिसिद्धे सुप एव कल्प्यत्वा-(त्तत्त्वा)रोपाच्छाब्दबोधस्य सुघटत्वात् । न च तिङां बाहुल्यं, तथाऽपि प्रत्येकं विनिगमकाभावात् । न च सुपां सार्वत्रिकत्वमेव विनिगमकम् । पचतीत्यत्रैव तदभावात्, वारि दृश्यत इत्यत्र लुप्तविभक्तिप्रतिसन्धानं विनाऽपि तिङेकत्वप्र-त्ययाच्च । तत्र लुप्तस्य प्रतिसन्धानं कल्प्यत इति चेत् चैत्रेण दृष्टो घट इत्यत्रा-प्यस्तीतितिङ्प्रतिसन्धानस्य सम्भवात् । न चैवं गङ्गापदस्यापि तीरे शक्तिरस्तु । तत्र तद्भेदे प्रमात्वे बाधकाभावादिविनिगमनाविरहाच्चेति वाच्यम् । तत्र निरूढ-कोशादेरेव बाधकत्वात् । न चैवं तथा, द्वयेकयोर्द्विवचनैकवचने इति सामान्यत एवानुशासनसत्त्वात् ।

कर्तरि तु न शक्तिगौरवात् । न वा चैत्रादावनुशासनानुग्रहाभावादिति दिक् ॥

कृतेति । तदुत्तरसुप एव संख्योपस्थितिसंभवात् कृतो न संख्यायां शक्तिरिति चैत्रो ग्रामं गत इत्यादावपि तृतीया चैत्रेण ग्रामो गत इत्यादावपि द्वितीया स्यादिति भाव । नन्वाख्याते न कर्तृसंख्याभिधानानभिधानाभ्यां नियमो भविष्यतीत्यत आह—किं चेति । न नियम । कर्तुरेव कर्त्राख्यातेन कर्मण एव कर्माख्यातेन संख्याभिधीयत इति नियमो न, संभवतीति शेष । असंभवमेवोपपादयति—पदार्थतेति । एकत्वत्वाद्यवच्छिन्नस्येत्यर्थ । कर्तृकर्मेति । तथा च कर्तृकर्मविहिताभ्यामप्याख्याताभ्यां कदाचित्कर्मकर्तृगतसंख्याबोधसंभवात् चैत्रेण पचति तण्डुलश्चैत्र पच्यते तण्डुलमित्यपि स्यादिति भाव ।

ननु कर्मैकत्वत्वादिना शक्यत्वयोग्यतावशादेव न साधारण्यमत आह—कर्मैकेति । आदिपदात्कर्मैकत्वत्वपरिग्रह । अभिधेयत्वमिति विशेषणमयेति शेष । ननु कृतिमदेकत्वत्वमेव शक्यतावच्छेदकम् । कृतिमत्त्व च सामानाधिकरण्येन । सामानाधिकरण्य च कर्तृकर्मैकत्वयो कृतिसमवायिनि कृतिविशेष्ये च समवेतत्वमिति कर्मादेर्नाभिधेयत्वबाधोऽतीत्यत आह—शक्ताविति । ममैकवचनत्वादिनैकत्वादौ शक्तिनियममाख्यातत्वेन कर्तर्यात्मनेपदत्वेन कर्मणीति शक्तिपञ्चकम्। तव कर्मादिविहितैकत्वत्वादिना च कर्मैकत्वादौ शक्तिपञ्चक सुबेकवचनत्वादिना चैकत्वादौ शक्तिनियम् , आख्यातत्वेन कृताविव्येका , आत्मनेपदस्थले च तस्या विशेष्यान्वय इति व्युत्पत्त्यन्तर, फलविशेषस्य कर्मत्वे तत्रापि शक्त्यन्तरमिति दशैकादश वा शक्तय इति शक्तौ गौरवम् । ममैकवचनत्वादिना शक्तस्य तव कर्तरि विहितैकवचनत्व शक्ततावच्छेदकम् । तत्तद्रूपेणेतिमते गुरुत्वाच्छक्यतेत्युक्तम् । अत्र चैत्र ग्राम नयति मैत्र इत्यादौ कर्मणोऽपि कर्तृत्वात्तत्क्रियाकर्मैकत्वत्वादिना शक्यत्वस्य वाच्यत्वादतिगौरव शक्यतावच्छेदके, शक्यानन्त्य च बोध्यम् ।

ननु तत्रैव कथ संख्यान्वयनियम ? कथ वा न गौरवमत आह—तस्मादिति । आख्यातत्वेनेति । आत्मनेपदस्यापि कर्तरि प्रयोगादिति भाव । आत्मनेपदत्वेनेति । परस्मैपदस्य कुत्रापि कर्मण्यप्रयोगादिति भाव । एकवचनत्वादेर्दुर्वचत्वादाह—तत्तद्रूपेणेति । एवमाख्यातत्वादेरपि दुर्वचत्वे तिप्त्वादिकं तथेति बोध्यम् । एकपदेति । तथा च तत्तदाख्यातजन्यसंख्याप्रकारकबोधे तत्तदाख्यातजन्यकर्तृकर्मोपस्थिते कारणत्वान्नान्यत्र संख्यान्वय इति भाव । अत्र चैत्रश्चैत्र नानातीत्यादौ कर्मणा[ऽभिधायि]विषय वरूपकर्मत्वेन नाभिधानमाश्रयत्वरूपमात्रकर्तृत्वेनैव तदभिधानादिति बोध्यम् ।

पदोपस्थाप्यैः। तथैवाकाङ्क्षितत्वात्। चैत्रः पचति पच्यते तण्डुल इत्यादौ कर्तृ-कर्मणी प्रथमान्तपदोपस्थाप्यतया भावनाविशेष्ये इति तत्रैव संख्यान्वयः। चैत्रेण सुप्यते गगनेन स्थीयते इत्यादौ प्रथमान्तपदाभावात् धात्वर्थस्य भावनायां विशेषणतयैवान्वयस्य व्युत्पन्नत्वात्, भावनाया बाधितत्वाच्च, भावनाविशेष्यवि-

केचित्तु दृश्यते चैत्र पचति, गच्छति चैत्र पचतीत्यादौ एकत्र द्वयमितीयदे-ख्याख्यातार्थद्वये स्वतावच्छेदकीकृत्यापराख्यातार्थान्वयवारणाय-कर्मत्वाद्यनव-रुद्ध इति। आख्यातोपस्थाप्यकर्मत्वाद्यविच्छिन्न इत्यर्थः, तेन पक्व भुज्यते, तण्डुलस्य पाको भवतीत्यादौ पाककर्मत्वतण्डुलकर्मत्वादिमति भावनाया अन्वयो नाव्यप्त। यद्वैव धात्वर्थस्य स्थाने दर्शनविषयत्वतात्पर्येण प्रवृत्ते श्रुति स्वाहा जायते इत्यादावन्वयापत्ति, तत्र प्रथमाया एव चतुर्थ्यर्थे लाक्षणिकतया तद्वदत्वेऽप्याख्यातोपस्थाप्यतत्त्वकत्वाभावादिति वाच्यम्। इष्टत्वात्। अन्यथा प्रथमातोऽप्यप्रतीतेरापात्। इतिसाध्यस्येष्टसाधनत्वाद्यावत्कर्मकक्रियाया धात्वर्थे च सन्न्ययवारणाय प्रथमान्तपदोपस्थाप्यैरिति। तथा च तद्विशेष्यक-भावनाप्रकारकशाब्दबोधे पूर्वोक्तद्वयमाकाङ्क्षा मन्तव्यानुपूर्वीज्ञानात् ततद्धर्मप्रकारकतावच्छेदकीभूय तत्तद्धर्मप्रकारकान्वयबोधोऽप्यभवत्सिद्धस्तत्तदानुपूर्वीज्ञानस्य विशिष्य तादृशान्वयबोधे हेतुतया दृश्यते चैत्र पचतीत्यादौ न तथान्वय इति भाव इत्याहुः।

ननु प्रथमान्तपदोपस्थाप्यस्य भावनायां विशेषणत्वेनैव कुतो नान्वय इत्यत आह-तथैवेति। विशेष्यत्वेनैवेत्यर्थः, बोधस्येति शेषः। आकाङ्क्षितत्वात्, आकाङ्क्षाया वर्तमानात्। नन्वेवं भावप्रत्ययस्थले भावनाविशेष्यविरहात् संख्यान्वयो न स्यादित्यनेष्टापत्तिमाह-चैत्रेणेति। इत्यादाविति, भावनाविशेष्यविरहात्न निवृत्तेव संख्यायास्तेनान्वय। भावनाविशेष्यविरहे हेतुत्रयमाह-प्रथमान्ते-त्यादि। ननु उपस्थितभावनाया अनन्वयापत्तिदोषेण भावातिरिक्तस्थले एव प्रथमान्तपदापेक्षा भावस्थले तु धात्वर्थ एव भावनाविशेष्य इत्यत आह-धात्वर्थस्येति। ननु अनायत्या तादृशव्युत्पत्तिरपि भावप्रत्ययस्थले स्वीक्रियतामत आह-भावनाया इति। चैत्रवृत्तिस्वापनिरूपिताश्रयत्व-गगनवृत्तिस्थितिनिरूपिताश्रयत्वादेरेव प्रकृत भावनात्वेन तस्य धात्वर्थस्यापि-स्थित्यादौ बाधादित्यर्थ। एतच्चापाततः, निरूपकत्वसम्बन्धेनैव तस्य तथा बाधाभावात्। वस्तुतोऽत्र

१ ख. स्थाप्य एव साक्षाद्दृष्टत्वात्। चै। २ मथुरानाथास्तु चैत्रेण सुप्यते, इत्यतः प्रागिदं वाक्यं व्याचक्षते।

भावनायाश्च कर्तरि आश्रयत्वेन कर्मणि पुनरन्यथान्वयः, तव कर्तृ-कर्माभिधायित्ववदास्माकमपि तथान्वयबोधकत्वम् । अतो मैत्रेण पचति तण्डुलः तण्डुलं पच्यते मैत्रः, मैत्रः पच्यन्ते तण्डुल इत्यादयो न प्रयोगाः। भावना च व्यापारमात्रोपलक्षिका अचेत-
अवण-व्यञ्जनविषयेऽपि श्रुतिपद-व्यतिपदप्रयोगात् । कर्मवाचकपदाभावेन कृदभिहितत्वे न्यायस्य तथात्वभवादिविषयकमप्रवृत्तेन ।

नतु यदि भावनाविशेष्य एव सङ्ख्यान्वयस्तदा पच्यते तण्डुल इत्यादौ तण्डुलादिषु कथं तदन्वयः तत्राश्रयतासम्बन्धेन भावनाया बाधितत्वेन भावनाविशेष्यत्वाभावादित्यत आह–भावनायाश्चेति । स्वाश्रयत्वेन, स्वाश्रयतासम्बन्धेन । कर्मणीति कर्मप्रत्ययस्थल इत्यर्थः । अन्यथा वक्ष्यमाणक्रमेण । तथा चाश्रयतासम्बन्धेन बाधेऽपि प्रकारान्तरेण विशेष्यत्वे न बाधकमिति भावः । ननु कदाचिदाश्रयतासम्बन्धेन कर्तर्यन्वयः क्वचिच्च कर्मणि अन्यथान्वय इत्यत्र किं नियामकमत आह–तवेति । तवाख्यातस्य कर्तृ–कर्मबोधकत्वं तुल्यं ममापि आख्यातस्य कर्तर्याश्रयत्वेन भावनाबोधकत्वं कर्मण्यन्यथा तदन्वयबोधकत्वमित्यर्थः । तथाच यथा त्वन्मते परस्मैपदस्य न कर्मबोधकत्वं तथा ममापि परस्मैपदस्य न कर्मणि भावनाया अन्यथान्वयबोधकत्वं किंतु कर्तर्याश्रयत्वेन तद्बोधकत्वं, यथा तव कर्तरि यक्रोऽसाधुत्वं तथा ममापि कर्तर्याश्रयत्वेन भावनान्वयबोधे तस्यासाधुत्वं, यथा तव एकदा न कर्तृ–कर्मबोधकत्वं तथा ममाप्येकदा न कर्तर्याश्रयत्वेन कर्मणि चान्यथान्वयबोधकत्वमिति भावः ।

क्रमेणासङ्कीर्णं प्रयोजनमाह–मैत्रेणेति । परस्मैपदेनापि तिपा कर्मणि तण्डुले विषयतया भावनाया अन्वयबोधने तद्गतसङ्ख्याया अपि तत्रैवान्वयात् तत्र प्रथमा स्यादेकदोभयान्वयबोधकत्वस्याभ्युपगततया मैत्रे आश्रयतया भावनान्वयात् तद्वृत्तिसङ्ख्याया अनभिधानात् तत्र तृतीया स्यादिति भावः । तण्डुलमिति । कर्तर्याश्रयतया भावनान्वयबोधेऽपि यक साधुत्वे पच्यते इत्यात्मनेपदेन कर्तरि मैत्रे तेन सम्बन्धेन भावनाया अन्वयबोधनात् तद्गतसङ्ख्याया अपि तत्रैवान्वयात् तत्र प्रथमा स्यादेकदोभयान्वयबोधकत्वस्याभ्युपगततया तण्डुले भावनाया विषयत्वेनानन्वयात् तद्वृत्तिसङ्ख्याया अनभिधानात् तत्र द्वितीया स्यादिति भावः । मैत्र इति, एकदा उभयान्वयबोधस्याभ्युपगमे पच्यत इत्यनेन भावनाया कर्तर्याश्रयतया कर्मणि चान्यथान्वयबोधनात्तदुभयवृत्तिसङ्ख्याया अभिधानेनोभयत्रैव प्रथमा स्यादिति भावः ।

आख्यातार्थभावनाविशेष्ये सङ्ख्यान्वय इत्यत्र भावनापदार्थं निर्वक्ति–भावना चेति । भावना न प्रयत्नत्वमात्रविशिष्टा अपि तु व्यापारत्वविशिष्टापीत्यर्थः ।

पाकजन्यफलशाली वा तण्डुलः प्रतीयत इति साक्षात्परम्परया भावनाया विशेष्यस्तण्डुलः, रथेन गम्यते ग्राम इत्यत्र रथनिष्ठगमनानुकूलव्यापारजन्यफलशाली ग्रामः प्रतीयते इति व्यापारविशेष्यो ग्राम इति ॥ ७ ॥

नव्यास्तु भावनायेराख्यातलभ्यत्वात् आधेयत्वमात्रं तृतीयार्थोऽस्तु संख्यामात्रं वा, संबन्धस्तु पच-साधित्याहुः । तत्र, तथापि फले धात्वर्थे विभक्त्यर्थभावनाविशेषणकान्वयबोधस्वीकारात् ।

केचित्तु चैत्रेण पच्यत इत्यत्र कृतिस्तृतीयार्थः पाके स च फले तदाश्रयत्वे तच्च तन्डुले प्रकारः । आश्रयत्वं त्वाख्यातार्थः । अत्रापि धातोः क्रियाफलयोः शक्तयः शक्तिरस्तीत्याहुः । अत्र द्वितीयकल्पे पाकस्य कथं भावनाविशेष्यत्वम् । प्रथमान्तपदार्थस्याप्यस्यादितिदूषणं मुख्यविशेष्यतया भावनान्वयबोधे प्रथमान्तपदोपस्थाप्यत्वमपेक्षितमित्याशयेन परिहरति—साक्षादिति प्रथमकल्पाभिप्रायेण, द्वितीयाभिप्रायेण परम्परयेति । रथनिष्ठेति अत्र तृतीयार्थो निष्ठत्वं गमने तच्च व्यापारे स च फले तच्च ग्रामे प्रकार इति । फलव्यापारयोरन्वये बलप्रकारो बोधः ॥ ७ ॥

(रामकृ०) अथेत्यादिकेन कथमित्यन्तेन प्रश्नः । चेतनाचेतनयोर्विभिन्न एवान्वय इत्यभिप्रायेणाह—चैत्रेणेत्यादिना । कर्मप्रत्ययस्थले फलबोधोऽनुभवसिद्ध इत्यभिप्रायेण द्वितीयम् । आख्यातार्थभावनाया धात्वर्थविशेषणत्वेनाप्यन्वयस्य तैः स्वीकारादिदमुक्तम् । उभयत्रापि पक्षे निष्ठत्वं तृतीयार्थः । प्रथमपक्षेऽपि । साक्षादिति । आद्यकल्पे साक्षात् द्वितीयकल्पे परम्परया ॥ ७ ॥

(न्यायर०) संख्यामात्रं वेति । कर्माख्यात इव कर्माख्यातेऽपि कृतिः चैत्रयोः सम्बन्धो व्याकरणार्थं इत्युभयत्र तदंशेन वैलक्षण्यमित्याशयेनेदम् । तथा च भावनाः परे तृतीयाप्रत्ययार्थान्वयो नामार्थेन धात्वर्थस्यैवान्वयोऽव्युत्पन्न इत्याख्यातार्थनिष्ठत्वात् (१), यत्पि परम्पराः प्रकृत्यर्थाविच्छिन्नत्वार्थयोरकत्वं तच प्रत्ययार्थातिरिक्तनामार्थविशेषणकान्वयबोधकत्वम् । अतएव चैत्रेण पच्यते तन्दुलमित्यत्र तन्दुलो न विशेषणतया भावनायामन्वेति । अन्यथा चैत्र इव

**तीत्यादाविव वाक्यार्थः । अस्तु च फल-कर्मणोरपि संबन्धस्तथ फलं तु कस्यार्थः । न च तदपि तथा, प्रकारीभूय भासमानत्वात् । फलावच्छिन्नक्रियाया धात्वर्थत्वेऽपि क्रियाजन्यफललाभात् विशेषण-विशेष्यभावविपर्ययस्यावश्यकत्वात् ।**

तण्डुलोऽपि विशेष्यतया विशेषणं स्यात्तथापि प्रकृत्यर्थप्रकारकान्वयबोधकत्वं प्रत्ययानां भावनाप्रकारकतण्डुलविशेष्यक-शाब्दबोधत्वमेव च तादृशा-कांक्षाज्ञानकार्यतावच्छेदकमिति तण्डुलादिप्रकारकबोधे इति भावः ।

केचित्तु आधेयत्वं तृतीयार्थ इति पक्ष एव साधुः । चैत्रेण पच्यत इत्यादौ चैत्रभावनयोः सम्बन्धो न वाक्यार्थः । प्रत्ययार्थविशेष्यतानिरूपितप्रकारता-सम्बन्धेन प्रत्ययजन्यबोधे प्रकृतिभिन्ननामार्थपदजन्योपस्थितेर्हेतुत्वात् । अन्यथा चैत्रेण पच्यते मैत्रो जानातीति प्रयोगे मैत्रस्यापि पाकभावनायामन्वयः स्यादिति प्रकृतिभिन्नेत्यादि विशिष्टाभावात् । एवं वर्तमानत्वान्वयेऽपि न ध्वनिरित्याहुः । सम्बन्धस्तृतीयाप्रकृत्यर्थभावनयोः सम्बन्धः, वाक्यार्थः संसर्ग-मर्यादया लभ्यः । तथा संसर्गमर्यादालभ्यः आकांक्षाज्ञानमात्रस्य इत्यर्थः । तदपि फलमपि । तथा वाक्यार्थः । तथाचानुभवविरोधेन न फलस्य संसर्ग-मर्यादया भानमिति भावः ।

ननु धातोः फलावच्छिन्नक्रियावाचकत्वात् तत एव फललाभ इत्याशं-कयाह-फलावच्छिन्नेति । फलमेव क्रियायां प्रकारः, न तु क्रियापि फले येन क्रियाजन्यत्वं फले लभ्येत । विशेषणविशेष्येति । यथा घटपदाद्घटत्वं नीलपदा-न्नीलगुणः प्रकारीभूय धर्मिभाने भासते तथा फलमपीत्यर्थः । न च फलनिष्ठ-जन्यतानिरूपकत्वरूपजनकत्वभाने जन्यत्वमपि भानमिति वाच्यम्, जन्यत्व-मेव जनकतानिरूपकत्वमित्यस्यापि वक्तुं शक्यत्वात् । तस्माज्जन्यताजनकता-भिन्ने एव । अनन्यथासिद्धव्यापकत्वरूपजनकत्वभाने तु जन्यत्वभानं न सम्भव-त्येव । जन्यत्वभाने जनकत्वभानं तु स्यात् तादृशव्यापक सामानाधिकरण्यगर्भ-त्वाज्जन्यताया इत्यन्ये । एतेन समानसंवित्संविद्यत्वन्यायो जन्यजनकतयोर्नि-रस्त । अनन्यथासिद्धतदभाववद्वृत्तित्वरूपं जन्यत्वम् । तथा च तदभानेऽपि जनकत्वभानमित्येके । वस्तुतो जनकत्ववद् जन्यत्वनिरूपकत्वरूपत्वं तद्भाने

१ फलाभावादिति पाठः । २ विशेष्यविशेषणेतीत्यन्यत्र पाठः ।

तस्मात् फलमात्मनेपदार्थः, इत्थं च आख्यातोपस्थापिताया भावनायाः क्रियाविषयिण्याः फलेऽन्वये फलस्य क्रियाजन्यत्वं न लभ्येत भावनाविषयक्रियायाः फलेऽन्वये तिङुपस्थापितभावनायाः क्रियाविशेष्यत्वेनान्यत्रान्वयः क्लृप्तो भज्येत । तस्मात् कृत्यनभिधायकभावकर्मकृद्योगे क्लृप्तशक्तेः सुपो लभ्यया भावनया विशिष्टायाः क्रियायाः फलेऽन्वयः,

जन्यताभावेऽपि क्रियाजन्यफलव्याप्तिरियं तन्दुलेन प्रकारीभूतं यत्प्रातुभाविकं तन्दुलं पचतीत्यत्रेवात्रापीति भावः ।

फलस्येति । क्रियाविषयभावनाजन्यत्वमेव लभ्यते क्रियाजन्यत्वफलव्याज्ञित्वकर्मत्वबोधः कर्माख्यातेन आनुभविक इति भावः । यद्यपि क्रियायाः फले भावनायां चान्वये नायं दोषः, पाकविषयकभावनाविषयपाकजन्यफलशालीति बोधसम्भवात् । तथापि तन्दुलं पचतीत्यत्रेवात्रापि फले पाकजन्यत्वमेव भासते, न तु भावनाविषयत्वमपीत्येवं सूपपं बोध्यम् । ननु भावनाविषयक्रियाजन्यत्वमेव फले भासते भावनायाः क्रियाविशेषणत्वादित्यत आह—भावनाविषयेति । धात्वर्थस्य तृतीयार्थभावनाविशेष्यत्वादाह—तिङुपस्थापितेति । अन्यत्रेति । पचतीत्यादौ कृतिरेव पाकविशेष्यत्वेन भासते यस्मार्थकाख्यातान्तधातुजन्यपाकप्रकारकबोधे आख्यातजन्यपदस्योपस्थितेर्हेतुत्वकल्पनात् । अतः काले न विशेष्यत्वेन भासते पचति नपचतीत्यादौ वर्तमानत्वादेः प्रकारतया अन्वयबोधात् ।

केचित्तु आख्यातार्थप्रकारकबोधे प्रकृतिभिन्नपदजन्योपस्थितेर्हेतुत्वोकत्वात् भावनायाः पाके विशेषणतयैवान्वयः । आख्यातार्थस्य कृतित्वरूपत्वादिभिन्नो याग इत्याहुः । प्रथमान्तपदानुपस्थाप्यत्वादेव क्रिया न भावनाविशेष्येति अस्तु पन्थाः । सुपो लभ्ययेति । चैत्रेण गतं मैत्रेण पक्वास्तन्दुलाः इत्यादौ तृतीयायाः कृतौ शक्तिः कर्तृत्वेऽर्थः । न च तत्र लक्षणा प्रकृतेऽपि तत्सम्भवात् । करणत्वापेक्षया कृताजेन व्यवहारात्तृतीयायाः शक्तिरित्यन्ये । एवं च तृतीयाजन्यकृतिप्रकारक पाकविशेष्यकत्वबोधे धातुजन्यपाकोपस्थितेर्हेतुत्वं चैत्रेण पक्व इत्यनुरोधेन कल्पनमिति भावः ।

फलावच्छिन्नक्रियाया धात्वर्थत्वेन कथं क्रियान्वयफलाश्रयत्वेन रूपेण शक्त्य-ग्रहात् । नहि घटपदस्य घटत्वप्रकारकघटविशेष्यकशक्तिज्ञाने सति जात्वपि ततो घटत्वविशेष्यघटप्रकारकज्ञानमिति भावः ।

स्वमतमुपसंहरति–तस्मादिति । इत्थं फलस्यात्मनेपदार्थत्वे । अन्यथेति । संख्याकालातिरिक्तस्य प्रत्ययार्थस्य प्रकृत्यर्थविशेष्यत्वेनैवान्वयस्य पच्यतीत्यादौ फलस्यत्वादित्यर्थः । चैत्रस्य पाकश्चैत्रेण पक्वास्तन्दुला इत्यादौ फलशालेः । पूर्वं तत्र कर्तृकर्मेत्यादिना । आश्रयतया कृत्यन्वयबोधः । अन्यथा कृत्यन्वय-बोधे च कर्तृकर्मबोधनियामकायनियामकानुपपत्तौ । नवीनमते तु कर्मप्रत्ययस्थले कृतेर्बोधास्वीकारात्तत्र सम्भवतीत्याह–कर्तृकर्मेति । नातिप्रसङ्गः न चैत्रेण पचति तण्डुलः चैत्रेण पच्यते तण्डुल इत्यादिप्रयोगप्रसङ्गः । एवमेकदा कृति-फलोभयाबोधकत्वनियमाभिप्रायेणाह–नचेति । कर्मप्रत्ययस्थले भावनान्वयात् पूर्वोक्तार्थस्यान्वयनियामकं न सम्भवतीत्यतो लाघवाद्वा आह–तिङिति । तथा च भावनान्वये यन्नियामकं तदेव संख्यान्वय इत्यर्थः । तन्दुलं पाचयति चैत्रो मैत्रेणेत्यादौ निष्ठत्वं तृतीयार्थः । तत्र णिजर्थेऽन्वेति । णिजर्थश्च कृतिः । एवं चैत्रे तिङर्थकृतिः, तदुपरि अनुकूलतासंसर्गेण णिजर्थकृतिः, तदुपरि पाको मैत्रनिष्ठत्वे च, पाकोपरि कर्मता, तदुपरि तन्दुलोऽन्वेतीति भिद्यते कुसूलः स्वयमेवे-त्यादौ च भेदानुकूलव्यापाररूपं कर्तृत्वं भेदाश्रयत्वरूपं कर्मत्वं चैकदा कुसूले-ऽन्वेति । धातुना चाकाङ्क्षामर्यादया तत्कुसूलनिष्ठभेदप्रतियोगितैव बोध्यते । किंवा तत्कुसूलकर्मकभेदत्वेनैव बोध्यत इत्यन्यदेतत् । यथोदनं पचतीत्यादावपि प्रसङ्गभङ्गाय तदोदनकर्मकपाकाभ्युपगमः । तत्र चाकांक्षाविरहात् पाककृति-मत्कर्तृकौदनव्यक्तिभासत इति न विभिन्नकर्तृकातिप्रसङ्गः । एवमन्य-दप्यूह्यम् ।

आकाशं पश्यतीत्यादौ शरनिपातजन्यं कार्मुकमित्यादौ च विशेष्ये विशेषण-मित्येव प्रथमतो बोधः । आकाशं न पश्यतीत्यादौ चाकाशविषयिताश्रयज्ञाना-श्रयत्वस्य तादृशचाक्षुषाश्रयत्वस्यैव वा अभावो धर्मिणि भासते । तादृशविष-यितायां प्रतियोगितावच्छेदकसम्बन्धश्च पश्यामीति विषयितानिरूपितस्वरूप-सम्बन्धविशेषो व्यधिकरणः । अतो मैत्र आकाशं न पश्यतीत्यादौ मैत्रस्या-काशविषयकचाक्षुषवत्त्वेऽपि न क्षतिरिति । यदि तु तदंशे लौकिकसन्निकर्षा-जन्येऽपि दोषविशेषजज्ञाने तन्निरूपितो रजतं पश्यामीत्यनुव्यवसायसिद्ध आकाशनिरूपितो विषयताविशेषोऽपि स्वीकर्तव्यः । इत्थं चाकाशनिरूपित-

तादृशविषयिताश्रय-चाक्षुषाश्रयत्वावच्छिन्नप्रतियोगितैव तयोः संसर्गः । आकाशं न दृश्यत इत्यादौ च ज्ञानविषयतायास्तादृशलौकिकविषयतानिरूपितस्वरूप-सम्बन्धेनाभाव आकाशे भासते, तेनान्यवृत्तिचाक्षुषासत्त्वे चैत्रीयघटचाक्षुष-विषयताया आकाशे सत्त्वेऽपि न क्षतिरिति शशविषाणजन्यं कार्मुकमस्तीत्यादौ च शशविषाणजन्यकार्मुकत्वमेव प्रतियोगितावच्छेदकं परन्तु प्रतियोगिताव-च्छेदकतावच्छेदकः सम्बन्धः शशविषाणयोर्जन्यत्वरूपो व्यधिकरण इति ।

एवं पीतः शङ्खो नास्तीत्यादावपि पीतत्वशङ्खत्वोभयावच्छिन्नप्रतियोगितैव सम्बन्धः । यद्वा-पूर्वरीत्या पीतत्वशङ्खत्वयोः प्रतियोगितावच्छेदकतावच्छेदक-सम्बन्ध एव समवायः, न तु प्रतियोगिताधर्मघटक इति नाप्रसिद्धिः । वस्तुतस्तु अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिसिद्धमित्यस्याप्यु-परि प्रकारीभूतधर्म आकाङ्क्षावशादभावप्रतियोगिनो संसर्गतया भासत इत्यर्थः । प्रतिबध्यप्रतिबन्धकभावादौ लाघवमनुरुन्धाना नवीनाः पुनस्तत्रैवाखण्डप्रति-योगितामामनन्ति ।

एवं च नीलघटो नास्तीत्यादौ धर्मविधया प्रतियोगितावच्छेदकता । नीलत्वे नीलगुणे धर्मिणि घटत्वे च संसर्गविधया तस्य च नीलत्वसमवाये नीलगुणसमवाये तद्भेदे घटत्वसमवाये च व्यासज्यवृत्तिरवच्छेदकसम्बन्धाश्च प्रतियोगितावच्छेदकतावच्छेदकसम्बन्धास्ते च प्रतियोगिकोटौ तत्तद्रूपे भासन्तो घटो नास्तीत्यादौ घटत्वस्य समवाय इव त एव धर्मा अभावप्रतियोगिनः संसर्गतयाऽपि भासन्ते ।

एवं दण्डपुरुषवान् चैत्रो नास्ति दण्डिपुरुषवांश्चैत्रो नास्तीत्यनयोराद्ये धर्मविधया प्रतियोगितावच्छेदकत्वं दण्डत्वादौ दण्डपुरुषतत्संयोगाश्रयचैत्रत्वेषु च । द्वितीये दण्डत्वादौ दण्डसंयोगिपुरुषतत्संयोगिचैत्रत्वेषु सम्बन्धविधया तस्य तु तत्तत्पदार्थानां तेषु तेषु सम्बन्धिषु व्यासज्यवृत्ति......अभावेन सह सम्बन्धः । दण्डसंयोगचैत्रत्वादुभयत्र तुल्यान्येवेति । सर्वत्रैव प्रतियोगिताव-च्छेदकतावच्छेदकसम्बन्धः प्रतियोग्युपरि संसर्गतया तत्तद्रूपे भासते । प्रति-योगितावच्छेदकसम्बन्धः पुनरभावप्रतियोगिनोरिति ।

एवं चाकाशं न पश्यति शशविषाणजन्यं कार्मुकं नास्तीत्यादौ त एव पदार्था अभावप्रतियोगिनो संसर्गतया भासन्ते विशिष्टस्यानतिरेकेण विशिष्ट-संसर्ग इत्यपदार्थान्तरस्याभावादिति ।

एवं रक्तरूपदण्डद्वितयादिनिरूपिता एका प्रकारिता रक्तदण्डो दण्डवानिति विशेष्ये विशेषणन्यायेन रक्तदण्डवानित्यादिज्ञानत्वावृत्ता रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधे तिष्ठति विशेष्ये विशेषणमित्यत्र च रक्तरूपनिरूपितमेव दण्डनिरूपितं चैकमिति प्रकारित्वद्वय, तच्च रक्तदण्डः दण्डवानिति समूहालम्बनादव्यावृत्तम् । एवं धर्मितावच्छेदक विशिष्टमविशिष्टं वा कृत्वा विधेय च तादृश कृत्वा तत्तदुभयादिनिरूपिताविलक्षणविषयताबोध्या । तत्रैव च विधेयोद्देश्यतावच्छेदकयो. परस्परव्यत्ययेन तदुभयादिनिरूपिता एव । ततोऽन्या एताश्च विषयिताः सर्वाः प्रतिबन्ध्यप्रतिबन्धकभावाद्यनुरोधेन कॢप्ता अनुभवारूढाश्च । ताश्च प्रतिनियतकारणप्रयोज्याः स्वयमूह्याः । एतेन साकारवादाभिमतरीत्या सर्वेन विशिष्टवैशिष्ट्यबोधादौ विशिष्टादिनिरूपित. संसर्गविशेषोऽतिरिक्तः संसर्गमर्यादया भासते, स च संसर्गविशेषो नान्यत्र संसर्गतया वा अन्यथा वा भासते इति फलबलात्कल्प्यत इत्यादि कुतर्कस्तनमपास्तम्, विषयितायां विषयनिरूप्यत्वानभ्युपगम एव साकारवादापातात् ।

इदं त्ववधेयम्—विशिष्टवैशिष्ट्यबोधादिषु स्वीकृता विषयिताः समाप्त्यावृत्ता एव कल्प्यन्ते । परामर्शादिकारणतायां व्याप्त्यादितत्तदंशावच्छिन्ननिश्चयत्वमपेक्ष्य लाघवेन तत्तन्निरूपितविषयिता एव समाप्त्यावृत्ताया जनकतावच्छेदकत्वौचित्यात् । अतएवानुमानदीधितौ रक्तो दण्डो न वेति संशयानन्तरं रक्तदण्डवानिति विशिष्टवैशिष्ट्यबोधाभावः स्वीकृतो दण्डांशे निर्णयाकारो रक्तत्वांशे संशयाकारस्तु जायत एव, तत्र सामग्रीसत्त्वादिति संक्षेपः ।

गवां कृष्णा सम्पन्नक्षीरा इत्यादौ च कृष्णभिन्नगोसामान्यभेदोऽभेदश्च कृष्णोपरि अभेदोपरि च प्रकृत्यर्थो गोरन्वेति । तादृशकृष्णत्वावच्छिन्नाभेदश्च सम्पन्नक्षीरकृष्णयो. सम्बन्धः । एवं च गवाभिन्न-कृष्णाकृष्णाभिन्न-गोसामान्यभिन्नसम्पन्नक्षीराभिन्ना इति बोध. । अतिप्रसङ्गश्चोक्तसम्बन्धाभ्यामेव निराकृतः । गोषु दुह्यमानास्वागत इत्यादौ भावसप्तमीस्थले च कालीनत्व संसर्गः । काल एव वा तद्वृत्तित्वं संसर्ग, । एवं च दुह्यमाना भिन्न गोकालीनागमनवानिति बोधः दुग्धास्वागत इत्यादौ चोत्तरकालीनत्वमुत्तरकाल एव वा संसर्ग इत्यादि स्वयमूह्यम् । छत्रिणो यान्तीत्यादावजहत्स्वार्थलक्षणास्थले च यद्यपि छत्रपदे छत्राभावविशिष्टच्छत्रे लक्षणा । विशेष्यं च स्वाश्रयगमनकालीनगमनवृत्तित्व, यदि चेच्छत्रच्छत्रिणोर्भिन्नदेशीय-

चैत्रो गन्ता गतो ग्रामो मित्रा पक्षी गतं पुरम् ।
भोक्ता तृप्यति पक्वानि भुंक्ते पक्त्वापसार्यताम् ॥
इत्यादौ सामानाधिकरण्याद्यन्यथानुपपत्त्या कर्तृ-

गमनवत्त्वेनैतादृशप्रयोगः तदा वैशिष्ट्ये देशघटितं सामानाधिकरण्यमपि प्रवेश्यताम् । यत्र च छत्री एकः छत्रशून्याश्च बहव, तत्र बहुत्वान्वयानुरोधात् छत्रविशिष्टजनाभावे लक्षणा । वैशिष्ट्य निरुक्तमेवेत्यापाततो वक्तुं शक्यते तथा छत्रिणौ द्वावच्छत्रिणौ च द्वौ तत्र कथितप्रकाराभ्यां बहुत्वान्वयो दुरुपपाद इति तत्र श्रद्धेयम् । परन्तु यथा पुष्पवन्तादिस्थले एकैकशक्त्या चन्द्रत्वसूर्यत्वाभ्यां प्रकाराभ्यां बोध्यते । शक्यतावच्छेदकता च व्यासज्यवृत्तिरिति केवलचन्द्रत्वादिप्रकारको बोधो लक्षणयैव । तथा छत्रपदस्य केवल छत्रत्व शक्यतावच्छेदकमिति शक्यतावच्छेदकमव्यासज्यवृत्ति । लक्षणा तु उभाभ्यां छत्रत्वछत्रत्वाभावत्वाभ्यामिति । लक्ष्यतावच्छेदकत्वं व्यासज्यवृत्ति । इत्थ चोभाभ्यां रूपाभ्यामुपस्थितमुभयथा योग्यमन्वेति । तत्र च गमनाश्रयत्वादिकं बहुत्वादिकमन्वेतीति न काप्यनुपपत्तिरिति दिक् ॥ ८ ॥

(न्यायया०) नन्वाख्यातोक्तयुक्त्या कृतामपि इत्यादौ धर्मे शक्ति स्थापयतो धर्मिणि वृत्तां शक्तिमुपपादयति–चैत्र इत्यादिना । समानविभक्तिकत्वस्य विरुद्धविभक्तिराहित्यस्य वा अभेदान्वये तन्त्रत्वादिति भावः । यद्यपि चैत्रो दण्डी कुण्डलीत्यत्र समानविभक्तिकत्वेऽपि गुणानां च परार्थत्वादिति न्यायेन दण्डिकुण्डलिनो न परस्परान्वय, तथापीतरविशेषणत्वेन तात्पर्याविषयत्वमपि तत्र तत्र बोध्यम् । कर्मस्थले त्वाह–गत इति । लिङ्गभेदेऽप्यभेदान्वयमत्र दृढयितुमपरलिङ्गद्वयमाह–मित्रेत्यादिना । चैत्रो गन्तेत्यत्र भेदान्वयेऽप्युपपत्ति । न च समानविभक्तिकयोर्भेदेनान्वयबोधो न दृष्टचर, निपातस्थले एव दृष्टत्वादिति । अतो यत्र तथा नोपस्थितिस्तदाह– भोक्तेति । यद्वा दोषान्तरमाह–भोक्तेति । अत्र कृत कृतिवाचकत्वे भोजनकृतिस्तृप्यतीत्यन्वय स्यात्, सा च बाधिता, न च परम्परया कृतेरन्वय, कर्तुरभानेऽनुभवविरोधात् । न च नियमेन पुरुष इत्यध्याहार्यम्, तथा च भोक्ता पुरुष इत्याश्रयतया कृतेरन्वय इति वाच्यम्, निर्धर्माध्याहारकल्पेन गौरवात् । पक्वानीति । धर्मे शक्तौ पक्वस्य तन्दुलादर्मान न स्यात् । धर्मे च भोजनकर्मत्वं बाधितमित्याशय । कर्मप्रत्यये उदाहरति–पक्त्वेति ।

**वा कृत्यादिघटित एव कर्त्रादिना सममन्वयः। मुख्यभाक्तसाधारणस्य फलादिलक्षणकर्मत्वस्य कृत्यादिलक्षणकर्तृत्वस्य चानभिधाने द्वितीयादयः। कृता विशिष्टाभिधाने विशेषणस्याप्यभिधानात्॥९॥**

प्रतियोगित्वादे परम्परासम्बन्धेनान्वयः। अन्यथा तद्दृष्टान्तेन गौर्नित्या इत्यत्रापि लक्षणा गोत्वेन स्यात्। न च तद्विशेष्यकपदार्थान्तरबोधे वृत्तिजन्य-तद्विशेष्यकोपस्थितेर्हेतुत्वान्न तथा बोधः। मैवम्-गौर्नित्य इत्येकदेशे भेदे नित्यान्वयात्।

अत्रापि तथाकल्पनात्तत्र आह-अस्तु वेति। एवं पाकस्य धर्मिण्येव स्वजनककृतिसम्बन्धेनान्वयात्। तथा च पक्वेत्यत्र पाकवान् कर्ता इत्यन्वय-बोधः। न चैवं पचा पचनीत्यन्वयबोधः स्यात्। उद्देश्यतावच्छेदकविधेययो-रैक्याभावादिति वाच्यम्, उद्देश्यतावच्छेदक-विधेयाभेदस्थले इष्टत्वादपि निरा-काङ्क्षत्वात्कल्पनात्। केचित्तु तद्देशशक्तिरित्याहु चैत्रस्य मतत्वादावपि यत्प्र-र्थस्य स्वाश्रयान्यत्वसम्बन्धेनैव धर्मिणि अन्वयो विधेरपि तथैवोपपादित धात्व-र्थयोः कृतौ कर्मत्वे आश्रये च कृत धातिरतो नैकदेशान्वयः। तेन पचेत्यत्र पाकवान् कर्त्रेति बोधे पाकानुकूलकृतिमान् वेति संशयनिरासो न स्यादित्यपा-स्तमित्याहुः। केचित्तु अस्तु वेत्यापातत। चैत्रपक्वा मैत्रादन्यो घट इत्यादि-बोधेन तद्विशेष्यकापरपदार्थान्वयबोध एव वृत्तिजन्यतद्विशेष्यकोपस्थितेर्हेतु-त्वात्। अतो गौर्नित्या इत्यादावेकदेशान्वय इत्याहुः, तच्चिन्त्यम्, घटो ज्ञायत इत्यादौ घटत्वे ज्ञानविषयत्वान्वयापत्तेः। यन्न शुक्लं चैत्रस्य धनमित्यादौ शुक्लत्वधनत्वादौ स्वत्वस्यान्वयापत्तिश्च। परे तु यत्तु कर्मत्वाभावः कात्तुमविक-ल्पः। अन्यादिपदानां मैत्रादिभेदवति लक्षणेति पदान्तरं तात्पर्यग्राहकं आश्रये अन्यत्वादौ वा अन्यादिपदानां वा खण्डशः शक्तिरित्याहुः।

ननु एवं कर्तृकर्मवाचकत्वे तन्दुलं पचति चैत्रेण पक्वेत्यपि स्यात् अतो मुख्येति मुख्यं तन्दुल पक्वत्वादौ भाक्तं घटं ज्ञाता इत्यादौ। आदिपदेन जानातीच्छतीत्यविषयत्वादिसंग्रहः। कृतादित्यादिपदात् रथो गच्छतीत्यादावा-श्रयत्वादिपरिग्रहः। यद्यपि कृतां कर्मादिशक्तौ सिद्धायां कृताकर्माद्यनभिधाने द्वितीयादय इत्येव वक्तुं युक्तं तथापि लाघवात् कर्मत्वाद्यभिधानमित्युक्तम्। ननु कर्तृत्वानभिधानं सर्वदैव कृतस्तद्विशिष्टवाचकत्वादत आह-कृतेति। विशिष्टस्यानतिरेकाद्विशेषणस्यैतरप्यभिधानादिति भावः॥ ९॥

( रामरु० ) इत्थं व्यवस्थामाह—चैत्र इत्यादिना । चैत्रो गन्तेत्यादौ समानविभक्तिकयोरभेदान्वयस्य व्युत्पन्नत्वादिति भावः । कर्मण्यपि तथा द्रढयति—मित्रेति । ननु यति—गत इति । लिङ्गविशेषेणापि सामानाधिकरण्य द्रढयति—मित्रेति । ननु लाघवादाख्यातवत् कृतामपि कृतावेव शक्तिरस्तु । अभेदसंसर्गबोधश्च सदिग्धः, चैत्रो गच्छतीत्यत्रेव चैत्रो गन्तेत्यादावपि कृदर्थस्य चैत्रादिना भेदेनैवान्वयोऽस्तु, प्रातिपदिकार्थयोर्भेदेनान्वयबोधे प्रकारीभूतेत्यादिव्युत्पत्तौ तु प्रातिपदिकत्वमर्पयद्धातुप्रत्ययः प्रातिपदिकमिति पूर्वस्वरससिद्ध कृद्यावृत्तमेव वक्तव्यम्, लिङ्गैक्यं तु साधुत्वार्थकमन्यथाप्युपपत्स्यत इत्यत आह—भोक्तेति । कृतः कृतिवाचकत्वेऽत्र भोजनकृतिस्तूपचाश्रय इति बोधः स्यात् । न चैवमनुभवविरोधादिति लाघवेन कृतौ शक्तिः कृतिविशिष्टे प्रकृते लक्षणेत्यत्र च ग्रन्थकृतैव वक्ष्यत इति ।

कर्तृशक्तत्वे एकदेशान्वयं बाधकमुद्धर्तुमाह—चैत्रस्येत्यादि । ननूपदस्य पुत्रपुत्रशक्तस्य पुत्रैकदेशेन यथा पष्ठ्यर्थान्वयो यथा वा भेदप्रथमस्त्यादि गुणविशिष्टशक्तानां अन्वयपुगादिशब्दानां एकदेशेन भेदादिना पष्ठ्यर्थस्तथाऽत्रापीत्यर्थः । तथैव एकदेशेनेव । अस्तु वेति । पाचक इत्यादौ अनन्तरस्याश्रयस्य कृतिमात्र पाककर्ता । नप्तेत्यत्र स्वाश्रयपुत्रपुत्रत्वं स्वाश्रयपुत्र एव वा अन्यतारूपपष्ठ्यर्थनप्तोरन्य इत्यादौ च स्वाश्रयभेदवत्त्व स्वाश्रयभेद एव वाऽनुयोगितारूपषष्ठ्यर्थान्वयः । एव रीत्या परत्रापि समन्वयोऽस्तीत्यर्थः ।

इदमत्रावधेयम्—पुत्रत्वस्य व्याप्तिघटितजन्यत्वघटितत्वाद्धातोश्च व्यापकव्याप्योभयघटितत्वाच्चैत्रस्य पुत्र इतिवद्वापि नानार्थनप्तृपदतात्पर्यग्राहकस्यैव चैत्रस्येत्यर्थेति चैकदेशान्वयसम्भावना । अन्यथा चैत्रस्य पुत्र इत्येव प्रय नोद्भावितमिति ।

कृदाख्यातसाधारणमभिहितानभिहितत्वविवेकमाह—कृदादीति । आदिना विषयत्वादिपरिग्रहः । कृत्यादीत्यादिना आश्रयत्वादिसङ्ग्रहः । ननु विशिष्टशक्तस्य कृतः कथं कृतित्वाद्यभिधायकत्वमत आह—कृतेति ॥ ९ ॥

यत्तु धातूत्तरप्रत्ययत्वेनैव कृतौ शक्तिः, पाचकादिपदे तु सामानाधिकरण्यानुरोधात् कृतिविशिष्टे लक्षणेति, तन्न, भावकृतोऽपि कृतिवाचकतापत्तेः, धातुत्वादिघटितात्तस्मादाख्यातत्वस्यैव लघुत्वाच्च । यदपि कर्तृकृतोऽपि कृतौ शक्तिः कृतिविशिष्टे तु लक्षणैवेति, तदप्यसत् यतो विनावच्छेदकरूपं शक्यत्वासंभवात्, गोत्वत्वादिना शक्तौ चातिगौर-

( व्याख्या० ) कर्मप्रत्ययेऽपि कृतौ शक्तिरस्त्येव समभिव्याहारविशेषाभावान्न द्दोष इत्याशयेन तदुपेत्याह–भावकृत इति । तथा च कृतिनाशकाले इदानीं पाक इति धीर्न स्यादिति भावः । ननु तत्र प्रत्ययार्थे न तात्पर्यम्, स्वधात्वर्थावच्छेदेन वा वर्तमानत्वं भासते अतो धातुत्वादीति । केचित्तु भावकृतोऽपि कृतिवाचकत्वस्वमास्तां किं न च्छिन्नम् । कृतिनाशकाले इदानीं पाक इति बुद्धेरप्रमात्वमेवात आह–धातुत्वादीत्याहुः । धातुत्वादीत्यादिपदात् प्रत्ययत्वादिसङ्ग्रहः । तथा च धातुत्वप्रत्ययत्वोभयघटित-तदपेक्षया आख्यातत्वस्यैव लघुत्वादित्यर्थः । प्रत्ययत्व-घटकान्यतरत्वविशिष्ट तावद्भेदापेक्षया तदन्यभेदघटिताख्यातत्वस्य लघुत्वात्वस्य शक्यतावच्छेदकत्वेऽतिलाघवात् कर्तृकृतः कृतौ शक्तिः पाचक इत्यादौ अभेदान्वयानुरोधाद्विशिष्टे लक्षणेति मतमाह–यदपीत्यादिना । यत इति । अस्तित्वस्य हेतुर्येनो विशिष्टान्तराणां शक्यत्वं विधीयेत ततोऽसदित्यर्थः । न च यद्वे गोत्वे शक्तिरास्ताम्, गोत्वत्वं संस्कारवशादुपस्थितं भासते लक्षणायामतिरिक्तस्यमिवेति वाच्यम्, तथा सति धर्मिणो लाभो न स्यात् । आक्षेपलभ्यत्वोक्तौ जातिशक्तिवादोक्तदोषापत्तेः । गौर्गौरिव जातित्यन्वयोऽपि न स्यात् । लक्ष्यतावच्छेदकत्वनियतभाने च न स्यात् गोत्वत्वस्येति ध्येयम् । वस्तुतो लक्ष्यतावच्छेदकेऽपि लक्षणैव । न [illegible] तीरत्वविशिष्टबोधत्वं गङ्गापदलक्षणा ज्ञानकार्यतावच्छेदक इति तीरत्वांशे लक्षणां विनापि निर्वाहे वृत्तिजन्यपदार्थोपस्थितिहेतुः, ननु तदंशेऽपि वृत्तिजन्येति न तद्धर्मपि लक्षणेति वाच्यम् । एवं घटत्वेऽपि शक्तिर्न स्यात्, कारणताकार्यताजन्यानां कारणतावच्छेदकत्वरूपेण शक्तिजन्यस्यापि शक्यतावच्छेदकत्वाविरोधात् । अवयवेनापि शक्यात्वगमसम्भवादिति ध्येयम् ।

विशिष्टान्तराणामिति । विभक्तपदानां महत्त्वविशेषे मूलत्वादौ शक्तिः

**एवं च गतो ग्रामो गम्यत इत्यादौ फलस्य कृदात्मनेपदाभ्यामेव लाभात् लाघवाद्धातोरनन्यलभ्यव्यापारविशेषमात्रवाचकत्वस्थितौ ग्रामं गच्छति ग्रामस्य गन्तेत्यादौ द्वितीयादेः फलजनकत्वलक्षणं कर्मत्वमर्थः। फले च प्रातिपदिकार्थोऽधिकरणत्वेना-**

न च कृत. सामान्यतस्तेन तेन रूपेण वा कर्तरि शक्तिः। शतृशानचादौ तु आदेशीभूतलट्स्मरणे वर्तमानत्वांशबोधे एव तन्त्रम्। यत्नबोधकाख्यातजन्यवर्तमानत्वबोधे आख्यातजन्ययत्नोपस्थितेर्हेतुत्वकल्पनात्। अन्यथा चैत्र. पचतीत्यादौ चैत्रे वर्तमानत्वान्वयापत्तेरित्याहुः ॥ १० ॥

( रामकृ० ) भावकृतोऽपीति। तथात्वे च पाचक इत्यादौ पाककृतिरित्यनुभवः स्यात्। स्याच्च व्यापारस्य वर्तमानदशायां कृतेरतीतत्वे पाक्तो नष्ट इति भाव.। धातुत्वादीति। धातुत्वं भूवादिगणपठितान्यतरत्वरूपधातुत्वमपेक्ष्यैव तत्र स्वल्पतरतिङ्घटितान्यतरत्वरूपाख्यातत्वस्य लघुत्वं गुरुतरं च धातूत्तरप्रत्ययत्वापेक्षयेति भावः। इदं चाभ्युपगमेन। वस्तुतो धातूत्तरप्रत्ययत्वमाख्यातत्वं वा न शक्ततावच्छेदकं किन्तु तिप्त्वादिकमेवेत्युक्तमेव प्रागिति।

एवकारसत्त्वेनैव वा। यद्यपीति। कृतौ विशिष्यशक्तिकल्पनेऽपि कृतित्वमेव शक्यतावच्छेदकम्, लाघवात्। कृतिप्रकारकबोधस्तु लक्षणयैतन्मताभिप्राय इति। प्रतिबन्धात् कूलपति-पत इति। अस्तु वा गवादिपदानामित्यादौ हेतु-र्विनित्यादिगौरवादित्यन्तम्। विशिष्टेति। आकाशादिपदस्यापि उपयुक्ते. शक्ते शक्ति शब्दविशिष्टे लक्षणाऽस्त्वित्यर्थः। अथ केवले विशेषणे स्वारसिकप्रयोगाभाव एव केवलविशेषणशक्तौ बाधकस्तदा प्रकृतेऽपि तुल्यमित्याह—केवलेत्यादि। एतत्प्रतिबन्धा आख्यातस्यापि कृतिविलोपप्रसङ्गस्तु ध्येयः ॥१०॥

(न्यायवा०) फलावच्छिन्ने व्यापारे धातोर्न शक्तिः किन्तु शुद्धे व्यापारे इति मतं दूषयितुं एवं चेत्यारभ्य केचिदित्यन्तेन तन्मतमुपन्यस्यति। एवं फलस्यात्मनेपदसमर्पने व्यापारविशेषो गमनादि। तथा च गम्यादिधातुभ्यो देश-संयोगाद्यवच्छिन्ना क्रिया न बोध्यते किन्तु तत्तद्विशेषैरेवेत्यर्थः। भावप्रधानेत्यस्य-च्छेद। द्वितीयादेरिति। आदिपदाद्ग्रामस्येत्यत्र षष्ठ्या अवकर्षं। इदं चादेशे शक्तिरिति मते। वस्तुतः षष्ठ्या द्वितीया स्मार्यते। आदेशो षष्ठी गौरवाद् द्वितीयादेरित्यादिपदादात्मनेपदपरिग्रह इत्यन्ये।

न्वेति, फलमात्रं वा अर्थः। जनकत्वं तु संसर्गमर्यादया लभ्यत इति केचित् । तदसत्, ग्रामं गच्छति त्यजतीत्यादौ द्वितीयादितः फलसामान्यलाभेऽपि नियतसंयोग-विभागाद्यलाभेन फलविशेषावच्छिन्नव्यापारस्यैव धात्वर्थत्वात्। इतरथा त्यजि-गमिप्रभृतीनां पर्यायत्वापत्तेः। तथापि गम्यते ग्राम इत्यादौ ग्रामादेः संयोगादिफलशालित्वं कुतः प्रतीयत इति चेत्, न। तदवच्छिन्नव्यापारवाचिधातुसमभिव्याहारादेव, यथा इष्टसाधनत्ववाचकाद्विधेरेव स्वर्गकामादिपदसमभिव्याहारात् स्वर्गादिजनकत्वं, प्रतीतिस्त्विष्ट-फलयोरिष्टत्व-फलत्वाभ्यां स्वर्गत्व-संयोगत्वाभ्यां

अधिकरणत्वेनेति, संसर्गभूतेनेति बोध्यम् । आधेयत्वसंसर्गेण वा बोधो बोध्यः। काण्यमाराह—फलमात्रमिति, तदसत् । व्यापारविशेषमात्रवाचकत्वं भवतु। नियतेति। तल्लाभे गृहाद्ग्रामं गच्छतो ग्रामस्यैव गमनं, न तु गृहस्येति न स्यात् । गृहवृत्तिफलजनकत्वसामान्याभावस्य तथात्वात् । नतु त्यजिगम्यादेरेव विभागसंयोगरूपफलतात्पर्यं ग्राहकत्वं, प्रत्ययस्तु द्वितीयादितः फलत्वेनैवेत्यत इतरथेति । यद्वा—फलत्वं सामान्यमिति संयोगत्वादिविशिष्टे द्वितीयादिशक्तिः, तत्र संयोगादिविशेषे गम्यादिस्तात्पर्यग्राहक इत्यत इतरथेति । इतरथा धातोः शुद्धव्यापारवाचित्वे पर्यायतापत्तेः । गमनत्यागयोरेकार्थता स्यादित्यर्थः । अन्यनिपाततः प्रभृतिपदाद्यादेः परिग्रहः ।

ननु फलावच्छिन्नव्यापारवाचित्वेऽपि फलविशेषवाचकस्य मते कथं स्यात्, फलस्य व्यापारविशेषणत्वेन कर्मणि तदन्वयात्। आख्यातस्य फलसामान्यवाचकत्वादित्याशङ्कते—तथापीति। ग्रामं गच्छतीत्यादौ धात्वर्थतावच्छेदकसंयोगे द्वितीयार्थस्याधेयत्वस्यान्वयबोधाभ्युपगमात्मकम्। तदवच्छिन्नेति । विशेषसंयोगाद्यवच्छिन्नेत्यर्थः । तत्फलस्य भावाद्यन्वयेऽपि तत्समभिव्याहारेण फलविशेषबोधकत्वे द्वितीयादेरित्यर्थः । इतरसमभिव्याहारेण सामान्यवाचकस्यापि विशेषबोधकत्वे दृष्टान्तमाह—यथेति ।

नन्वेवमिष्टसाधनत्वमिव ज्ञेयाभिधेयत्वादिविषयसाधनत्वमपि भावप्रत्ययात् विशेषणसमभिव्याहाराद्विशेषबोधोपपत्तिरिति स्वर्गसाधनत्वादिकमेव शक्यमतः

चैत्यन्यदेतत् । अस्तु वा बुद्धिविशेषवाचकतादे-
रिव व्युत्पत्तिवशादेव प्रकृत्यर्थतावच्छेदकफल-
तच्छालिवाचकत्वात्-कृञोरपि विशेषरूपेण बो-
धकत्वम् ॥ ११ ॥

स्वर्गसाधनत्वादिप्रकारकसंशयो नेत्यत आह–अस्तु वेति । यद्वा–ननु विशेष वाचकत्वविधेन त्वितरसमभिव्याहारादिविशेषवाचकत्वम्, तथा सति स्वर्गकामो दधि न जुहोतीत्यादिर्न स्यात् । भोजने इष्टसाधनत्वसामान्याभावस्य स्यात् (१) । तथा च दृष्टान्तासङ्गति । एवं ग्रामः गम्यते न तु गृहमिति न स्यात् । गमनत्वरूपसामान्याभावस्य गृहेऽसत्त्वादत आह–अस्तु वेति ।

अयमर्थः—गृहे घटोऽस्ति न वेति प्रश्ने सोऽस्तीत्युत्तरात् सन्देहनिवृत्ते विशेषरूपेणैव तदादिबोधकत्वं, न तु बुद्धिस्थत्वेन । तथा च घटत्वादीनां पृथक् शक्यतावच्छेदकत्वे बहुशक्तिकल्पनमित्यैकशक्तिर्वाच्या तथाच घटत्वादिकमेव शक्यतावच्छेदकं तेषामननुगमकं बुद्धिस्थत्वावच्छेदकं च तथा चैकैव शक्तिः । शक्यतावच्छेदकत्वेन शक्यतावच्छेदकतावच्छेदकस्याप्यनुगमकत्वैक्यमिति मतेनाह–बुद्धिविशेषवाचकेति । अनन्य एव शक्यतावच्छेदकतावच्छेदकमपि भासते । प्रकृते तद्भाने विशेषरूपेण तद्बोधकता न स्यात्तथापि बुद्धिस्थताव-च्छेदकत्वतिरोधादित्याकारं कल्पितं । पदार्थोपस्थितौ तु बुद्धिस्थतावच्छेदकं न भासते तत्र तद्बोधकविरहादिति भावः । तथा च तत्रादिपदार्थप्रकृत्यर्थताव-च्छेदकत्वविशिष्टे शक्तिग्रहात् तद्धर्मविशिष्टसंयोगादिफल प्रकृत्यर्थतावच्छेदक तद्धर्मविशिष्टैकाश्रयतादिबोधकत्वमित्यर्थः ॥ ११ ॥

( रामकृ० ) चैत्रो गच्छतीत्युदाहरणस्य चैत्रो गन्तेत्यनन्तरं प्राप्ताद्युपपत्तिं केषाञ्चिन्मतमुपन्यस्यति–एवं चेति । एवं च फलस्यात्मनेपदादिना वाच्यत्वे च । व्यापारविशेषो गमनादिक्रियारूपः । ग्रामस्येत्यत्र षष्ठ्या एव कर्मत्वमर्थ इति । एकदेशापरिहाराय शक्यतावच्छेदकलाघवाय चाह–फलमात्रं वेति । अशाभादित्यन्त फलविशेषेत्यादौ हेतुः । फलत्वमात्रलाभेऽपि फलत्वरूपेण फलत्वलाभेऽपि । नियतवि, प्रतिनियतेत्यर्थः । इतरथा... ..क्रियाया एव वाच्यत्वे पर्यायेति । उभयत्रापि क्रियारूपशक्याविशेषात् त्यागगमनपदप्रभृतीनामप्येकार्थत्व स्यादिति भावः ।

---

१ उपस्थापकत्वमिति पाठः । २ बुद्धिविषयनीतत्टीकायु ।

**फलमर्थः । स्याद्वा फलव्यापारौ पृथगेव धात्वर्थौ, विशिष्टस्तु अन्वयबललभ्यः ॥ १२ ॥**

यद्वा–अस्मिन् कल्पे द्वितीयाया आधेयत्वमिव कर्मोत्पत्तस्याश्रयत्व मेवार्थः । गमनं धात्वर्थान्तरे फले तदाश्रयत्वे तच्च ग्रामादौ प्रकारः । गम्यते ग्राम इत्यादौ गमनजन्यफलाश्रयत्ववान् ग्राम इति बोधः । कर्मप्रत्ययान्तगम्यादिधातुजन्यस्पन्दप्रकारकबोधे तदर्थसंयोगोपस्थितेर्हेतुत्वं, कर्मप्रत्ययान्तगम्यादिधातुजन्यसंयोगादिप्रकारकबोधे तदर्थस्पन्दोपस्थिते हेतुत्वकल्पनाभ्यामतिप्रसङ्गः । न चास्मिन् कल्पे सप्तमीतो द्वितीयाया अभेदः, आश्रयार्थविशेष्यकाधेयत्वबोधकत्वात् । द्वितीयायाः सप्तम्यर्थस्य नामार्थेऽप्यन्वयात् । नच तण्डुलस्य पाक इत्यत्र षष्ठीस्मारितद्वितीयार्थस्य पाकेऽप्यन्वयात् । मैवम्, तत्र षष्ठ्यर्थस्य मानादिति ।

यद्वा–द्वितीयार्थाधेयत्वबोधे सुप्भिन्नसार्थकप्रत्ययप्रकृतिजन्योपस्थितेर्हेतुत्वं कल्प्यते, न तु सप्तम्यर्थबोधे भूतले देवदत्त इत्यादिप्रयोगादिति विशेष इत्याहुः । इतरा स्मारिता या अर्थस्य धात्वर्थे सैवान्वयात् इत्यनेनैव भेद इत्यन्ये ॥ १२ ॥

( रामकृ० ) फलावच्छिन्नव्यापारस्य धात्वर्थत्वे प्राचीनसम्मतिं दर्शयन् कर्मत्वविभक्त्यन्यथानुपपत्तिमपि प्रमाणयति–अपि चेत्यादिना । पूर्वस्मिन् देश इति । तत्र क्रियाजन्यविभागरूपफलसत्त्वादिति भावः । उत्तरस्मिन्निति । तत्र क्रियाजन्यसंयोगसत्त्वादिति भावः । स्पन्देरकर्मकत्वायोगादाह–पूर्वापरयोरिति । एकत्र तादृशसंयोगस्य परत्र तादृशविभागस्य सत्त्वादिति भावः । स्पन्दने तु पूर्वं धात्वर्थतावच्छेदकं तत्तत्फलमनतिप्रसक्तमेव । उत्तरत्र तादृशफलमेव नास्तीति प्रसङ्गशङ्काऽपि न । फलावच्छिन्नव्यापारवाचित्वेऽप्यदृष्टुपष्टम्भमात्रफलेत्यादि ।......नादेः फलाभावात् । तादृशधातुयोगे फलावच्छिन्नव्यापारवाचि धातुयोगे । अतएव स्पन्दादेर्न कर्मप्रत्यया इति ।

एवं चाधेयत्वमेव द्वितीयार्थ, फलस्य धातुत एव लाभादित्यभिप्रायवान् तदनुरोधेनैकदेशान्वयं स्वीकुर्वन् शाब्दबोधमुपपादयति–तत्र चेति । अत एव पदार्थैकदेशान्वयाधेयत्वबोधकत्वादेव । एकदेशान्वयासहिष्णुराह–अस्तु वेति । अत्रापि पूर्वोक्तरीत्या कुडाद्यावच्छिन्नसंयोगादिरूपफललाभमस्तु तदवच्छिन्नव्यापारवाचित्वेन नीलघटत्वस्य शक्यतानवच्छेदकत्वेऽपि परम्परमन्वयबलादुपस्थित-नीलघटत्वावच्छिन्न प्रतियोगिताकामस्तथा प्रवृत्तेऽपीति भावः ॥ १२ ॥

*भूमिं प्रयाति विहगो विजहाति महीरुहं, न तु स्वात्मानमित्याद्यनुरोधात्, क्रियान्वयि परसमवेतत्वमपि कर्मप्रत्ययार्थः । इयांस्तु विशेषो यत्परत्व सुपा प्रकृत्यर्थापेक्षिकं तिङादिना च स्वार्थफलाश्रयापेक्षिकं प्रत्याय्यते ॥ १३ ॥

( न्यायचा० ) भूमिं प्रयातीति । भूमिसंयोगस्य भूम्यामिव विहगेऽपि सत्त्वे भूमिं प्रयातीतिवद् विहगो विहगं प्रयातीति वारणाय कर्मप्रत्ययस्य परसमवेतत्वमर्थ इत्यर्थः । विजहातीति । विभागस्याप्युभयनिष्ठत्वात्तथा बोध्यम् । परत्वं भिन्नत्वरूपमेवार्थः । समवेतत्वं संसर्गः । तथा च ग्रामं इत्यत्र द्वितीयार्थं आधेयत्वं भिन्नं च तदुभयं क्रियान्वयि, तथा सति ग्रामाधेया ग्रामभिन्नवृत्तिर्या ग्रामविशेष्या क्रिया तदनुकूलकृतिमानित्यर्थः । नचैवं यत्र विहगविहगोभयज उत्तरसंयोगस्तत्र विहगस्यापि परसमवेतक्रियाजन्यत्वात् कर्मत्वं स्यादिति वाच्यम्, इष्टापत्तेः, तत्रोभयोरेव कर्मत्वात् । नचैवं तत्र विहगो विहगं गच्छतीति स्यात् । विहगभिन्नसमवेता या क्रिया तदनुकूलकृते विहगेऽभावेन तदवगाहनप्रतीतेरभावादिति । न च यत्र रथाकर्षणादिना रथमभिमुखं सम्पादयन् रथे गच्छति चैत्रस्तत्र चैत्रं गच्छतीति स्यादिति वाच्यम्, तादृशपरक्रियानुकूलव्यापारताद्रूप्येण संसर्गतया विवक्षितत्वात् । अन्यथा अत्र द्वितीयाप्रत्ययार्थतावच्छेदकं यत्तदवच्छिन्नरूपं परत्वं बोध्यम् । अन्यथा विहगेऽपि विहगस्य व्यासज्यवृत्ति-धर्मावच्छिन्नप्रतियोगिताक-भेदसत्त्वादुक्तदोषः स्यात् । न चैवं प्रमेयमन्दुकं पचतीत्यत्र प्रमेयत्वद्रूपत्वावच्छिन्नभेदाप्रसिद्धिः । प्रमेयघटो नास्तीति प्रतीतेरप्रामाण्यादिति ।

न चात्र ग्रामतात्पर्येण द्रव्यं गच्छति चैत्र इति प्रयोगः, तत्र द्रव्यत्वावच्छिन्नभेदस्य गमनकर्मत्वसम्भवः, तत्र द्रव्यपदस्य द्रव्यविशेषे लाक्षणिकत्वात् । परत्वं यदि प्रकृत्यर्थापेक्षितं तर्हि तदा चैत्रेण स्वात्मा गम्यत इत्यपि स्यादत इयांस्त्विति । स्वार्थफलाश्रयेति । स्वार्थफलप्रकारकान्वयबोधविशेष्यापेक्षिकमित्यर्थः ॥ १३ ॥

( न्यायचा० ) क्वचित्सविषयकघटप्रयोगेऽपि नान्तरीयके शर्करामोजनादौ शर्करामोजनं कुरुत इत्यादौ द्वितीयाया सनकत्वे लक्षणा, न विषयित्वमि-

* ' भूमिं प्रयाति ' इत्यारभ्य पोडशाङ्कान्तर्गतः ' स्वरसन्धानमनुगमान्तरस्या-नन्त्ये ' इत्यन्तस्य ग्रन्थस्य रामरुद्रव्याख्यानेऽपि व्याख्या प्रदर्शिता अवगन्तव्या-थयं एतेद् विज्ञापयामो विदुषः ।

घटं जानाति, इच्छति कुरुते, चैत्रः (मैत्रः)। मैत्रेण ज्ञायते इष्यते, क्रियते घट इत्यादौ सविषयकपदार्थाभिधायिधातुयोगे कर्मप्रत्ययेन यथायथं विषयित्वं विषयत्वं च कर्तृतिङा स्वाश्रयत्वं तृतीयया चाधेयत्वं बोध्यते ॥ १४ ॥

अन्वयबोधे त्वयं विशेषः–यदेकत्र कर्तर्याश्रयत्वं तत्र क्रिया तत्र विषयत्वं तत्र कर्मविशेषणत्वम् । अन्यत्र कर्मणि विषयता तत्र क्रिया तत्राधेयत्वं तत्र च कर्त्रेति । ज्ञातो ज्ञाता नष्ट इत्यादौ कर्तृकर्मकृतां विषयाश्रय–प्रतियोगिबोधकत्वम् । यतत इत्यादौ यत्यादिनोपस्थिते यत्ने विषयित्वेन नान्वयः, किन्तूद्देश्यत्वेन पदस्वाभाव्यात् । अत एवाभुज्ञानेपि भोजनाय यतते इत्यादयः प्रयोगाः ॥ १५ ॥

स्याहुः । यथायथमिति । द्वितीयाया विषयित्वमाख्यातेन विषयत्वमित्यर्थः । अत्र पच्यते तण्डुल इत्यादौ तण्डुलादेरेव पदस्वप्रतीतिर्भावनान्वयबोध इवाख्यातोपस्थाप्यपदार्थे विशेषणतया बोधे प्रथमान्तसम्योपस्थितिर्हेतु, फलबलात् । प्रथमान्तोपस्थाप्यस्यापि तथात्वमिति । अत्र च पुष्पवन्तादिपदवदेकोच्चारणान्तर्भावेन छवितोंऽध्या । अन्यथा पदसमभेतदर्थयोग्यतया ऽनन्वयेऽपि स्वात्मानं गच्छतीति प्रयोगापत्तेः ॥ १४ ॥

एकत्र कर्तृस्थले । आश्रयत्वमित्यादेर्विशेषणमित्यनेनान्वय. । ज्ञात इत्यनेन विषयः, ज्ञातेत्यनेनाश्रय., नष्ट इत्यनेन प्रतियोगिनोऽवगते इति बोध्यम् । धर्मिवाचकत्वं कृतामभिप्रेत्याह–कर्मकर्तृकृतामिति । सविषयाभिधायिधातुयोग इति सामान्यन उक्तं । अपवादमाह–यतत इत्यादि । करोतीत्यादिविवरणायाह–यत्यादिनेति । आदिना यत्यतीत्यादिसङ्ग्रहः । यतिधातोर्यत्ने लक्षणायां विषयत्वेनान्वयादाह–यत्न इति । ननु स्पृहावत्सविषयत्वबोध एव चतुर्थी स्यादतोऽन एवेति । सुज्ञाने तु न विलक्षणोद्देश्यत्वेनान्वयादित्यपि बोध्यम् । जनकपाकत्वप्रयोजकत्वमेव चतुर्थ्या बोध्यते । अतएवाभुज्ञाने भोजनाय यतत इत्यादिरित्याहुः । उद्देश्यत्वेनेति । तद्व्यतिरिक्त स्वरूपविशेषो वेदस्यन्वयेऽतद् । अत एव उद्देश्यत्वेनान्वयादेव । अन्यथा भोजनं करोतीतिवद्भोजनकाल एव भोजनाय यतत इत्यपि स्यात् ॥ १५ ॥

धातोरर्थः फलमनुकूलव्यापारो व्यापारमात्रं वा, आख्यातस्य जन्यजनकभावः संसर्गमर्यादया लभ्यः। लडादिलिङाद्यर्थो वर्तमानत्वादीष्टसाधनत्वादिकमेकपदोत्तरत्वप्रत्यासत्त्या तत्रैवान्वेति।

भावप्रत्ययस्य घञादेरनुकूलव्यापार एवार्थः। तेन व्यापारसत्त्वे फलानुत्पाददशायां पाको भविष्यतीति न प्रयोगः। न वा व्यापारविगमे फलसत्त्वे पाको विद्यते इति। नापि घट-भूतलयोर्मिथः संयोग इति वत् मिथो गमनमित्यादि।

प्रत्ययोपनीतपरसमवेतव्यापारजन्यधात्वर्थफलशालित्वं च कर्मत्वं, फलनिष्ठाधेयत्वं द्वितीयादीनां,

(न्यायवा०) मण्डनमतानुसारिमतमाह–धातोरिति। गमिपदार्थविभागोत्तरसंयोगादिरूपफलव्यापकत्वात् पर्यायतापत्तिः। आख्यातजन्यवर्तमानबोधे आख्यातजन्यपदार्थोपस्थितिर्हेतुरित्येकपदोपात्तत्वमित्यर्थः।

ननु फलस्य धात्वर्थत्वे फलसत्त्वे व्यापारविगमेऽपि पाकस्तिष्ठतीत्यादि स्यादत आह–भावप्रत्ययस्येति। अनुकूलव्यापार इति। अत्रापि व्यापार एव शक्यः अनुकूलत्वं संसर्ग इति बोध्यम्। मिथो गमनमिति। तत्तधात्वर्थस्योत्तरसंयोगस्य द्विष्ठत्वेऽपि तदनुकूलव्यापारस्यातत्त्वादिति तन्मते फलस्य धात्वर्थत्वात्।

धात्वर्थजन्यफलशालित्वं धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमुभयसम्पत्तूपपत्तमत आह–प्रत्ययोपनीतेति। प्रत्ययोपनीतो यो व्यापारः परसमवेतः तज्जन्यं धात्वर्थफलं तच्छालित्वमित्यर्थः। चैत्रपिण्डसमवेतं यद्गमनादि तज्जन्यं यत्फलं धात्वर्थः तच्छालित्वं कर्तरि चैत्रादावप्यस्ति, अतः प्रत्ययोपनीतेति वस्तुकथनम्। द्वितीयादिना परसमवेतत्वम्। आख्यातार्थव्यापारे आख्यातेन तृतीयार्थे तद्बोध्यते। परत्वं पूर्ववद्बोध्यम्। परसमवेतव्यापारजन्यं तद्धूसत्त्वप्रत्ययशालिनि कर्तृव्यावर्तनाय धात्वर्थेति। चैत्रनिष्ठेति। निष्ठत्वं तृतीयार्थो व्यापारः, आश्रयत्वं चाख्यातार्थः, व्यापारः फले, तत्राश्रयत्वं, तच्च चैत्रे, प्रकार इति व्यापारान्वितो धात्वर्थः फलं साक्षादेवान्वितं तण्डुले प्रकारत्वेन।

व्यापारनिष्ठं च तृतीयादिनाऽभिधीयते। एवं च तण्डुलं पचति चैत्र इत्यस्य तण्डुलवृत्तिफलविशेषजनकव्यापारवांश्चैत्रः, मैत्रेण पच्यते तण्डुल इत्यस्य मैत्रनिष्ठव्यापारजन्यफलविशेषशाली तण्डुल इत्यर्थः। फलव्यापारयोर्विशेषण-विशेष्यभावभेदादेव कर्तृकर्माख्यातव्यवहारः।

वस्तुतस्त्वाख्यातस्येव तृतीयाया अपि व्यापार एवार्थः। कर्माख्यातस्य च धात्वर्थफलनिरूपितमधिकरणत्वं, कर्मकृत आश्रयः, कर्तृकृतश्च व्यापाराश्रयः, कर्मकर्तृसामानाधिकरण्यानुरोधात्। जानातीत्यादिप्रयोगे तु पूर्वोक्तैव रीतिरनुसर्तव्या।

चैत्रेण पच्यते पक्व इत्यादौ सुबर्थ एव व्यापारे वर्तमानत्वाद्यन्वयः। पचमानः पक्ववानित्यादौ पुनरनायत्या पदार्थतावच्छेदक एव व्यापारे तदन्वयः।

ननु सद्व्यापारत्वातिरिक्तविभक्त्यर्थस्य व्यापारस्य धात्वर्थे प्रकारतया भानम् अनुभवविरुद्धमतो वस्तुतस्त्विति। मैत्रेण पच्यते इत्यत्र व्यापारस्तृतीयार्थः, फले धात्वर्थे, स चाख्यातार्थे, तच्च तंडुले अन्वेतीति एतद्रूपे कर्माख्यातस्य फले न बाधकमिति। धात्वर्थनिरूपितमिति निरूपितत्वसम्बन्धेन धात्वर्थस्याधिकरणत्वे। अन्वयबोधनायेदम्। अधिकरणत्वमात्रमर्थ इति बोध्यम्। पूर्वोक्तैवेति। घटं जानातीत्यादौ विषयित्वं द्वितीयार्थः, कर्मत्वं तत्र भावमिति।

ननु व्यापारस्याख्यातार्थत्वाभावे कुत्र वर्तमानत्वान्वयोऽत आह सुबर्थेति नचैवम् समानपदोपात्ते व्यापारे वर्तमानत्वान्वयेऽतिप्रसङ्गः, फलबोधकधातुसमभिव्याहारे तत्कर्मोपस्थितजन्यवर्तमानत्वबोधे च तृतीयाजन्यव्यापारोपस्थितेर्हेतुत्वादित्याह—दोष इत्यत आह—अन्वयोगेति, अतिप्रसक्तत्वात्। अन्वयोगवत्त्वपि विशिष्य पाकादिस्थलादप्रसिद्धि। यत्किञ्चित्प्रतियोगिकान्वयोदय सर्वत्र सत्त्वादिति शेषः।

स्तां वा व्यापाराश्रयौ शक्यौ विशिष्टमन्वयबल-लभ्यम्, एवकारस्येवान्ययोगव्यवच्छेदादौ, अन्ययोगप्रतियोगिकव्यवच्छेदस्यातिप्रसक्तत्वात् । अन्ययोगत्वावच्छिन्नप्रतियोगिकव्यवच्छेदस्य शक्यत्वे शक्यताप्रसिद्धिः, बाधितत्वं च पार्थ एवेत्यादौ, पार्थान्ययोगत्वावच्छिन्नव्यवच्छेदस्याप्रतीतिप्रसङ्गः । तस्य ततोऽन्यत्वात् स्वान्ययोगव्यवच्छेदेन शक्यत्वे च स्वत्वस्याननुगमाच्छक्यानन्त्यं, नीलो घटो नास्तीत्यादौ नीलघटत्वावच्छिन्नस्येव पार्थ एवेत्यादावपि पार्थान्ययोगत्वावच्छिन्नस्याभावप्रतीतिः । समानं चेदं कृतौ कालान्वयादिनाम् । धात्वर्थानुकूलव्यापारविरहिण्यपि महीरुहादौ संयुज्यत इत्यादिव्यवहारात् संयोगवत्त्वमात्रप्रतीतेः, न तु तत्र प्रत्ययस्य व्यापारबाधितेति न सकर्मकत्वम् । संयोग इत्यादौ धात्वर्थमात्रप्रतीतेर्यत्नादेः प्रयोगसाधुतामात्रत्वमिति मण्डनमतानुयायिनः ।

तन्न, पचतीत्यादौ पाकानुकूलवर्तमानयत्नाननुभवप्रसङ्गात् । फलानुकूलादृष्टवत्यपि पचतीत्यादेर्विभा-

नन्व योगः सम्बन्धः संयोगसमवायादिः, तथा चान्यपूर्वकत्वसमवेतत्वाभावादेर्गुणादौ ध्वंसादौ च प्रसिद्धितो बाधितत्वमिति प्रकृपदवाच्ययोः कथं परस्परमन्वययोजनेत्यत आह—समानं चेति । यद्वा त्वयाऽपि कृतः कृतिमद्वाचकत्वस्वीकारादेकदेशे कृतौ वर्तमानत्वान्वयो वाच्य इति साम्यमित्यर्थः । ननु यत्र तादृशव्यापारोऽस्ति तत्र संयुज्यत इत्यत्र तदनुकूलकर्मातिरिक्ते व्यापार कर्मनासाभासते संयुक्तः इत्यादौ, तत्र धात्वतीतस्मत आह—संयोगवचेति ।

नन्वस्तु तत्राख्यातस्य यत्ने लक्षणा, शक्तिभ्रमो वा, अतः फलेति । यत्नादृष्टातिरिक्तो व्यापारो वाच्योऽत आह—विभागेति यद्यपि पूर्वसंयोगातिरिक्तो

१ तत्रचेति पाठः । २ यत्नानुभवेति पाठान्तरम् ।

गाद्यनुकूलपूर्वसंयोगादिमति निश्चलादावपि विहगे त्यजतीत्यादेः प्रयोगस्य प्रसङ्गाच्च ॥ १६ ॥

तत्र तत्र तत्तत्फलानुकूलतत्तद्व्यापारविशेष एव धात्वर्थः । सर्वत्र धात्वाश्रयत्वमेव कर्तृत्वं संख्यावर्ते-

व्यापार आख्यातेनोपस्थाप्यते इत्युक्तौ न दोषः, सामान्यशब्दस्य विशेषपरत्वात्, तथाप्याकाशे गमनमिति प्रयोगापत्तिः । इतरसंयोगस्य तत्रापि सत्त्वादिति स्यादि., तच्चिन्त्यम् । अत्रापि लाघवादाख्यातस्य यत्ने शक्तिरिति दूषणमित्यन्यसिद्धोऽपि वह्निसंयोगो विक्लित्त्यनुत्पादककाले पचतीति प्रयोगः स्यात् । एवं पाक इत्यादिपक्षे पचादीनामनेकेषां शक्तिकल्पनमस्मिन्मते दूषणमित्यपरे । एतेन फलधात्वर्थो यत्नस्तु लाघवादाख्यातार्थ इत्यपि मतं निरस्तम् ॥ १६ ॥

[रामकृ०] केचित्तु—ननु शक्तशक्तिपक्षे व्यय-च्छेदसामान्य एव शक्तौ कथं तदवच्छेदविशेषलाभस्तत्राह—नील इति । यथा अभावमात्रशक्तेन नञ्पदेन समभिव्याहारविशेषलाभादभावविशेषबोधस्तथाऽन्यत्वादिमात्रशक्तादप्येतरस्मात् समभिव्याहारविशेषात् पार्थान्यत्वादिलाभ इत्यर्थ इत्याहुः । तत्र नीलविशेषणानुसरणवैयर्थ्यानिवेशः । नन्वेकपदोपात्तानां कथं परस्परमन्वयस्तत्राह—समानं चेति । ननु सर्वत्र व्यापारस्य प्रत्ययार्थत्वे संयुज्यते इत्यत्र गच्छतीत्यतोऽविशेषात् कथं न कर्मप्रयोगस्तत्राह—धात्वर्थेति । व्यापारविरहिणि क्रियाविरहिणि । ननु तत्रापि न व्यापारसामान्याभावः, तत्तत्तदवच्छेदेन निबिडसंयोगान्तराभावादिरूपप्रतिबन्धकस्यैव सत्त्वादित्यत आह—संयोगवत्स्वेति । इदमुपलक्षणम् । व्यापारकाले संयुज्यते......त्यप्रवृत्तिश्चेत्यपि बोध्यम् । अन्यत्र पचादेर्व्यापारवाचि त्वेऽपि संयोग इत्यादौ न तथा इत्याह—संयोग इत्यादावित्यादिना । ननु सार्वत्रिकस्य नानुभवः संदिग्धः कादाचित्कस्तु आनुमानिको मानसो वा शाब्द एव लक्षणया भविष्यतीत्यत आह—फलेति । नन्वसाधारणानुकूलत्वाविशेष एव संसर्गो भविष्यतीत्यत आह—विभागेति । नायंयुक्तस्य विभाग इति पूर्वसंयोगस्यासाधारण्येनानुकूल्येति ॥ १६ ॥

गुरुमतमाह—तत्र तत्रेति । आख्यातमाह—सर्वत्रेति । क्वचिदिति । मध्यमीनाद्ये नाकर्मकत्वमर्थे इति । तत्र तत्रेति । व्यापारस्य गुरुत्वं स्वगमना-

**मानत्वादिकं क्वचिदाश्रयत्वादिकमपि वा आख्यातार्थ इति गुरुमतमपि तत्र तत्र तादृशयत्नाननुभवप्रसङ्गादनुपादेयम् ॥ १७ ॥**

इति महोपाध्याय—श्रीरघुनाथशिरोमणिभट्टाचार्यकृत
आख्यातवादः समाप्तः ।

तण्डुलनोदनता गच्छतीत्या...वानमपि बोध्यम् । व्यापारत्वस्याखण्डोपाधित्वे मानाभावः । जनकत्वरूपस्य त्वननुगतत्वम् । एवमाश्रयत्वापेक्षया लाघवेन यत्न एवाख्यातशक्तिरित्याहुः । नन्वविभयकादिक्रियाप्रचयः पाकः, तथा च कस्यचित् क्रियायामतीतायामनागतायामपाक्षीत्, पक्ष्यतीति स्यादिति चेत्, न, अपाक्षीदित्यत्र चरमक्रियाध्वंसस्य पक्ष्यतीत्यत्राद्यक्रियाप्रागभावस्यैव मानात्, निपतन: तथैव तात्पर्यात् । यत्तु रत्नकोशमतम्—धात्वर्थो व्यापारः आख्यातार्थ उत्पादकत्वं पचति पाकमुत्पादयतीत्यर्थः । तन्न, उत्पत्तेराद्यक्षणसम्बन्धरूपाया अननुगमात् ।

अत्रेदं बोध्यम्—ओदनः पच्यते पच्यत इत्यत्र पचधातोरोदनपाके लक्षणा । तथा चौदनपाकसमानकर्तृक-तदुत्तरमात्रि-भोजन-जन्यफलशाली ओदन इति बोधः ।

केचित्तु ओदनोत्तर-प्रथमायाः कर्मत्वे लक्षणात् तस्यादेकत्वेति । ओदनस्तु भावनाया...पि विशेष्यत्वेनान्वेतीत्याहुः । एवं सति ओदनस्य भावनान्वयो न स्यात् । कर्मत्वापन्नपदस्यैव तदन्वययोग्यत्वात् । इत्यनेन कर्मकर्तरि भिद्यते कुसूलः स्वयमेवेत्यादौ कुसूलपदोत्तरप्रथमायाः कर्मत्वं व्यापारश्चार्थः । तेन कुसूलः स्वकर्मकभेदानुकूलव्यापारवान् स्ववृत्तिव्यापारजन्यभेदजन्यफलशाली [illegible]

[illegible]

व्यापारश्च । तेन कुसूलकर्मकभेदानुकूलव्यापारवान् कुसूलवृत्तिव्यापारजन्यभेदजन्यफलशालीति बोध इति बोध्यम् ।

चैत्रं तण्डुलं पाचयति मैत्र इत्यादौ चैत्रपदोत्तरद्वितीयायाः कर्तृत्वलक्षणकर्मत्वमर्थः । णिचश्च व्यापारोऽर्थः । आश्रयत्वे आख्यातस्य लक्षणा णिजर्थः शक्तिरेव वा...चेतनेन...हि तेनं पाचयति पाचयत् इत्यादौ णिचो लक्षणा, आख्यातेन तत्तत्र व्यापारवादि...बोध्यते णिचो निरर्थकत्वमित्याहुः । तथाच चैत्रकर्तृकस्तण्डुलकर्मको यः पाकस्तदनुकूलव्यापाराश्रयो मैत्र इत्यर्थः । यद्यपि चैत्रमैत्रोभय-

